सुपिड् सुपिषी सुपिंषि । इत्यादि ॥ सकारान्तः पयस्शब्दः ततः स्यादयः शौ नमि. । स्महत इति दीर्घः शेषं प्राग्वत् । पयः पयसी पयांसि । इत्यादि । एवं तेजस्वयस्एनस्अनस्प्रभृतयः ॥ विद्वस्शब्दात् स्यादयः भ्यां ङस उस् शेषं प्राग्वत् । विद्वत् विद्वद् विदुषी विद्वांसि । एवमनाश्वस्पेचिवस्प्रभृतयः ॥ अर्चिस्शब्दात् स्यादयः शौ नमि दीर्घे च कृते पुनरनुस्वारषत्वे । अर्चिः अर्चिषी अर्चींषि । इत्यादि । एवं सर्पिस्हविस्प्रभृतयः ॥

॥ इति हलन्ता नपुंसकलिङ्गाः ॥

---

## ॥ अथालिङ्गौ युष्मदस्मच्छब्दावुच्येते ॥

ततः स्यादयः युष्मदस्मद्भ्यामाकमित्यधिकृत्य ॥

**त्वाहौ सौ** ॥ १८१ ॥ युष्मदस्मदित्येतयोः त्व अह इत्येतावादेशौ यथासङ्ख्यं भवतः तत्सम्बन्धिन्यन्यसंबन्धिनि वा सौ परे । युष्मदस्मत्प्रकरणासमाप्तेः सुपः तत्सम्बन्ध्यन्यसम्बन्धित्वं वाच्यं ॥

**ङेसुटोऽम्** ॥ १८२ ॥ युष्मदस्मद्भ्यां परयोर्ङेसुटोरम् भवति । मत्वलुचौ ॥

**मन्तस्य युवावौ द्वयोः** ॥ १८३ ॥ द्वित्वे युष्मदस्मदोर्मपर्यन्तस्य रूपस्य युवावौ भवतः सुपि परे ॥

**अमौढ्याः** ॥ १८४ ॥ युष्मदस्मदोराद् भवति अमि औति हलादौ च सुपि परे । एद इत्यतो लुक् । अमदीर्घौ । जसि ॥

**यूयवयौ जसि** ॥ १८५ ॥ युष्मदस्मदोर्यूयवयौ भवतो जसि परे । अमादि आमन्त्रणेऽप्येवम् । अमि ॥

**त्वमौ प्रत्ययोत्तरपदे चैकस्मिन्** ॥ १८६ ॥ एकत्वे वर्तमानयोर्युष्म-

दस्मदोर्मपर्यन्तस्य त्वमौ भवतः सुपि प्रत्ययोत्तरपदयोश्च परतः । आत्वादि औटि पूर्ववत् । शसि ॥

**ङस्शोभ्यसोऽभ्यम्भ्यं** ॥ १८७ ॥ युष्मदस्मद्भ्यां परस्य ङसोऽश् भवति शस आदेर्नः चतुर्थीवहुवचनस्य भ्यसः अभ्यम् । आत्वादि । टायां त्वमौ ॥

**यौसि यः** ॥ १८८ ॥ युष्मदस्मदोर्यो भवति ङिटौस्सु परतः । अदित् एद इत्यतो लुक् भ्यामि युवावौ आत्वदीर्घौ भिस्यप्यात्वदीर्घौ ॥ ङयि ॥

**तुभ्यमह्यौ ङयि** ॥ १८९ ॥ युष्मदस्मदोस्तुभ्यमह्यौ भवतो ङयि परे । ङेरमादि भ्यामि प्राग्वत् । भ्यसः अभ्यमि ॥

**दोर्लुक्** ॥ १९० ॥ दान्तयोः युष्मदस्मदोर्लुग्भवति सुपि परे । एद इति लुक् ॥ ङसौ त्वमौ ॥

**भ्योऽसोऽत्** ॥ १९१ ॥ युष्मदस्मद्भ्यां परस्य ङसेः भ्यसश्च अद् भवति । दोर्लुगल्लुचौ । वा चर्वं । भ्यामि प्राग्वत् । भ्यसोऽदादि । ङसि ॥

**तवममौ ङसि** ॥ १९२ ॥ युष्मदस्मदोस्तवममौ भवतो ङसि परे । ङसोऽश् । शित्त्वात्सर्वस्य एद इति लुक् ओसि युवावौ यत्वादि आमि ॥

**युष्मदस्मद्भ्यामाकं** ॥ १९३ ॥ युष्मदस्मद्भ्यां परस्याम आकं भवति । दोर्लुगादि । ङौ । त्वमौ यत्वादि ओसि प्राग्वत् सुप्यात्वादि । त्वं युवां यूयं । हेत्वं हेयुवां हेयूयं । त्वां युवां युष्मान् । त्वया युवाभ्यां युष्माभिः । तुभ्यं युवाभ्यां युष्मभ्यं । त्वत् त्वद् युवाभ्यां युष्मत् युष्मद् । तव युवयोः युष्माकं । त्वयि युवयोः युष्मासु ॥ अहम् आवां वयम् । माम् आवाम् अस्मान् । मया आवाभ्याम् अस्माभिः । मह्यम् आवाभ्याम् अस्मभ्यम् । मत् मद् आवाभ्याम् अस्मत् अस्मद् । मम आवयोः अस्माकं । मयि आवयोः अस्मासु ॥

**तिङा वाक्यं** ॥ १९४ ॥ तिङन्तस्य विशेषणं तेन सह वाक्यसंज्ञं भवति ॥

**पदाद्वाक्यस्य वस्नसौ युष्विभक्तेः** ॥ १९५ ॥ स्ववाक्यावयवात्पदात्परयोः द्वितीयाचतुर्थीषष्ठ्यन्तयोर्युष्मदस्मदोर्वस्नसौ यथासङ्ख्यं वा भवतः । धर्मो वो रक्षतु । धर्मो युष्मान् रक्षतु । दानं वो दीयते । दानं युष्मभ्यं दीयते । तिङन्तादिपदाप्रयोगेऽपि तदर्थान्वयाद्वाक्यत्वं । शीलं वः स्वं । शीलं युष्माकं स्वं । धर्मो नो रक्षतु । धर्मोऽस्मान्रक्षतु । दानं नो दीयते । दानम् अस्मभ्यं दीयते । शीलं नः स्वं । शीलमस्माकं स्वं ॥

**वान्नावौ द्वित्वे** ॥ १९६ ॥ द्वित्वे वर्तमानयोर्यथोक्तविशेषणयोः युष्मदस्मदोः वान्नावित्येतावादेशौ यथासङ्ख्यं वा भवतः । धर्मो वां रक्षतु । धर्मो युवां रक्षतु । दानं वां दीयते । दानं युवाभ्यां दीयते । शीलं वां स्वं । शीलं युवयोः स्वं । धर्मो नौ रक्षतु । धर्मः आवां रक्षतु । दानं नौ दीयते । दानमावाभ्यां दीयते । शीलं नौ स्वं । शीलमावयोः स्वं ॥

**तेमयावेकत्वे** ॥ १९७ ॥ एकत्वे वर्तमानयोर्यथोक्तविशेषणयोर्युष्मदस्मदोर्यथासङ्ख्यं ते मे इत्यादेशौ वा भवतः । दानं ते दीयते । दानं तुभ्यं दीयते । शीलं ते स्वं । शीलं तव स्वं । दानं मे दीयते । दानं मह्यं दीयते । शीलं मे स्वं । शीलं मम स्वं ॥

**त्वामौ द्वितीयायाः** ॥ १९८ ॥ एकत्वे वर्तमानयोः यथोक्तविशेषणयोर्युष्मदस्मदोर्यथासङ्ख्यं द्वितीयान्तयोः त्वा मा इत्यादेशौ वा भवतः । धर्मस्त्वा रक्षतु । धर्मस्त्वां रक्षतु । धर्मो मा रक्षतु । धर्मो मां रक्षतु ॥

**नेवामन्त्र्यं पूर्वं** ॥ १९९ ॥ युष्मदस्मद्भ्यां पूर्वमामन्त्र्यपदं नेव असदिव भवति । असत्त्वे पदात्परत्वाभावात् तयोर्वस्नसादि न भवति । हे जना युष्मान्रक्षतु धर्मः इत्यादि । हेजना अस्मान्रक्षतु धर्मः इत्यादि । यत्र त्वामन्त्र्यपदात्पूर्वं पदान्तरमस्ति तत्र पदात्परत्वाद्वस्नसादि भवति । धर्मो हेजना वो रक्षतु । धर्मो हेजना नो रक्षतु इत्यादि । राजते जिनाराज ते ॥ नेत्यधिकृत्य ॥

**पादाद्यो:** ॥ २०० ॥ पादाद्योः तयोः वस्नसादि न भवति ॥

श्लोकः । त्रिलोकनगराधीशो युष्मान् पातु जिनेश्वरः ।
तस्यैव शासनं पुण्यमस्माकं मोक्षकारणम् ॥ इत्यादि ॥

**मनसीक्षार्थैः** ॥ २०१ ॥ मनसीक्षार्थैः धातुभिर्योगे तयोर्वस्नसादि न भवति। जनो युष्मान् समीक्षते। जनोऽस्मान् प्रेक्षते इत्यादि। मनसीति किं जनो वः पश्यति चक्षुषा ॥

**चवाहहैवयोगे** ॥ २०२ ॥ चादिभिर्योगे सम्बन्धे सति तयोर्वस्नसादि न भवति। जनो युष्मांश्च पश्यति। दानं युष्मभ्यं वा दीयते। इदं युष्माकमह शीलं। जनो युवां ह पश्यति। जनस्त्वामेव पश्यति इत्यादि। एवमस्मदोऽपि ॥

**नित्यमन्वादेशे** ॥ २०३ ॥ कथितस्य कथनमन्वादेशः तस्मिन् यथोक्तविशेषणयोर्युष्मदस्मदोर्वस्नसादि नित्यं भवति। यूयं विनीतास्तद्वो गुरवो मानयन्ति। वयं विनीतास्तन्नो गुरवो मानयन्ति इत्यादि। अन्वादेशे नित्यविधानात्पूर्वत्र विकल्पः ॥

अथाव्ययान्युच्यन्ते ॥

**तस्वन्ङामधणतस्याङक्त्वाम्तुन्तिसुङन्तस्वाभस्वरादीन्यव्ययं** ॥ २०४ ॥ तस् वत् ङां इत्येतदन्तानि धणवर्जिततस्यन्तानि आम् क्त्वा अम् तुम् इत्येतदन्तानि तिसंज्ञानि सुङन्तसुप्रतिरूपाणि स्वरादीनि च शब्दरूपाण्यव्ययसंज्ञानि भवन्ति। तस् पीलुमूलतस् इति स्थिते ॥

**अव्ययात्स्वौजस्** ॥ २०५ ॥ अव्ययात् स्वौजसः प्रत्ययाः परे भवन्ति ॥

**अव्ययस्य** ॥ २०६ ॥ अव्ययस्य सम्बन्धिनः सुपः लुग्भवति। पदसंज्ञायां सस्य रित्वादि पीलुमूलतो विद्योतते विद्युत् एवमन्यत्रापि। वत् मुनिवद्वृत्तमस्य ॥

ङाम् । किंतरां । तसि । रावणतः रामतः बहुशः । आम् । दयांचक्रे । क्त्वा भूत्वा । अम् । पूर्वंभोजं । तुम् । कर्तुं । ति । पटपटाकृत्य प्राध्वंकृत्य । सुङ्-प्रतिरूपं । रात्रौ । वेलायाम् । अस्ति । स्यात् । तसुप्रतिरूपाणि ततः । कथं । स्वरादि । स्वस्तिष्ठति अन्तस्तिष्ठति प्रातर्गच्छतीत्यादि ॥

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥

॥ इति नामसंग्रहः ॥

---

## ॥ अथ स्त्रीप्रत्ययान्ता उच्यन्ते ॥

त्रिचतुरः स्त्रियां तिसृचतसृ इत्यधिकृत्य ॥

**गुरूपोत्तमस्यानार्षेऽपत्येऽणिञः ष्यङ्** ॥ १ ॥ अनार्षेऽपत्ये अणि-ञन्तस्य गुरूपोत्तमस्य स्त्रियां ष्यङ् भवति । त्र्यादीनां वर्णानाम् अन्त्यमुत्त-मन्तस्य समीपमुपोत्तमं। षङावितौ षकारः ष्यदिति प्रत्याहारार्थः ङकारः अन्त्या-देशार्थः आङ् कारीषगन्ध्या दैवदत्त्या। गुरूपोत्तमस्येति किम् औपगवी दाक्षी॥

**नृदुगिदच्ञोऽस्वस्रादेर्ङीं** ॥२॥ स्त्रियां वर्तमानान्नान्तादृदन्तादुगिद-न्तादञ्चत्यन्ताच्च ङीप्रत्ययः परो भवति न स्वस्रादेः । ङ इत् नान्तात् राज्ञी श्वादि । सोर्हल्ङ्याडिति लुक् । ऋतः ॥

**क्रोष्टोर्ऋ** ॥३॥ स्त्रियां वर्तमानस्य क्रोष्टुशब्दस्य ऋदादेशो भवति। क्रोष्ट्री कर्त्री । उगितः । भवती यान्ती याती भवन्ती । अञ्चः । प्राची अपाची प्रतीची उदीची समीची सध्रीची तिरश्ची । अस्वस्रादेरिति किं । स्वसा दुहिता ननान्दा माता याता ॥

**पादो वा** ॥ ४ ॥ स्त्रियां पादन्तात् ङी वा भवति । ङ्यां पादोऽपदस्येति पद्भावः द्विपदी द्विपाद् ॥

**कुम्भपद्यादौ** ॥ ५ ॥ कुम्भपद्यादयः स्त्रियां ङ्यन्ता निपात्यन्ते । कुम्भपदी कलशपदी इत्यादि ॥ ऋच्यादिल्यधिकृत्य ॥

**मन्नन्बहुव्रीहेर्न च** ॥ ६ ॥ स्त्रियां मन्नन्तादन्नन्तबहुव्रीहेश्च आड् प्रत्ययो वा भवति प्रातश्च न भवति । ड इत् अन्त्याजादिलुगर्थः । दामा दामे दामाः । दामा दामानौ दामानः । बहुराजा बहुराजे बहुराजाः । बहुराजा बहु-राजानौ बहुराजानः । अजेत्याड् अजा अश्वा एलका मूषिका उष्णिहा क्रुञ्चा इत्यादि ॥

**टिड्ढणञ्ञणञ्गौरादिभ्यः** ॥ ७ ॥ स्त्रियां टितः टण्ढण्भ्याम् इञितः अणतः अञः गौरादिभ्यश्च ङी भवति । टितः उभयट् इति स्थिते ट इत् ङ्यर्थः ॥

**लुगतः** ॥ ८ ॥ अतो लुग्भवति ङ्यां परतः । उभयी । टणः आक्षिकी ढणः नादेयी इञः दाक्षी अणः औपगवी कुम्भकारी अञः औत्सी । गौरा-दिभ्यः गौरी । मत्स्य ङी इति स्थिते अल्लुचि ॥

**मत्स्यतद्धितस्य हलो यः** ॥ ९ ॥ मत्स्यशब्दस्य तद्धितप्रत्ययस्य च हलः परस्य यस्य लुग् भवति ङ्यां परतः । मत्सी मनुषी ॥

**सूर्यागस्त्ययोश्छे च** ॥ १० ॥ सूर्यागस्त्ययोर्ङ्यां छे प्रत्यये च यस्य लुग्भवति सौरी आगस्ती ॥

**वयस्यनन्त्ये** ॥ ११ ॥ स्त्रियामनन्त्ये वयसि वर्तमानात् अकारान्तात् ङी भवति । कुमारी तरुणी अनन्त्य इति किं स्थविरा ॥

**ऊध्नः** ॥ १२ ॥ स्त्रियामूधन्नन्ताद्बहुव्रीहेर्ङी भवति । श्नः । घटोध्नी ॥

**श्ववतो वा** ॥ १३ ॥ श्ववतोऽन्नन्ताद्बहुव्रीहेः स्त्रियां ङी वा भवति । बहुराज्ञी बहुराजा श्ववत इति किं । बहुश्वा बहुश्वे बहुश्वाः । बहुश्वा बहुश्वानौ बहुश्वानः ॥

**अनाच्छादनाज्जातेः पूर्वपदात् क्तादजातकृतमितप्रतिपन्नात्॥** १४ ॥ अनाच्छादनाजातिवाचिनः पूर्वपदात्परो यः क्तान्तः जातकृतमितप्रतिपन्नवर्जितः शब्दः तदन्ताद्बहुव्रीहेः स्त्रियां ङी भवति । शङ्खभिन्नी केशलूनी अनाच्छादनादिति किं वस्त्रच्छन्ना जातेरिति किं मासयाता जातादिप्रतिषेधः किं दन्तजाता दन्तकृता स्तनमिता गुणप्रतिपन्ना ॥

**पाणिगृहितीति पत्नी** ॥ १५ ॥ स्त्रियां पाणिगृहीतीत्येवंप्रकाराः पत्नीवाचकशब्दा ङ्यन्ता निपात्यन्ते । पाणिगृहीती करगृहीती पाण्यात्ती ॥

**वास्वाङ्गात्** ॥ १६ ॥ अस्वाङ्गवाचिनो यः क्तान्तः तदन्ताद्बहुव्रीहेरुक्तविशेषणात् स्त्रियां ङी वा भवति । पलाण्डुभक्षिती पलाण्डुभक्षिता अस्वाङ्गादिति किं शङ्खभिन्नी ॥

**असहनञ्विद्यमानान्नासिकोदरोष्ठजङ्घाकर्णदन्तशृङ्गाङ्गगात्रकण्ठाबह्वच्संयोगोपान्त्यात् स्वाङ्गात् समासात्** ॥ १७ ॥ सहनञ्विद्यमानवर्जितादस्वाङ्गवाचिनः परं यन्नासिकादि यच्चाबह्वचः संयोगोपान्त्याच्चान्यत्स्वाङ्गवाचि तदन्ताददन्तात्समासात् स्त्रियां ङी वा भवति । दीर्घनासिकी दीर्घनासिका तलोदरी तलोदरा विम्बोष्ठी विम्वोष्ठा समजङ्घी समजङ्घा चारुदन्ती चारुदन्ता लम्बकर्णी लम्बकर्णा पटुशृङ्गी पटुशृङ्गा नताङ्गी नताङ्गा तनुगात्री तनुगात्रा कलकण्ठी कलकण्ठा । अबह्वच् संयोगोपान्त्यात् सडी सडा वृश्चिकी । स्निग्धकेशी स्निग्धकेशा पृथुस्तनी पृथुस्तना रामा बहुकेशी बहुकेशा रथ्या दीर्घमुखी दीर्घमुखा प्रतिमा । असहनञ्विद्यमानादिति किं सहनासिका अनासिका विद्यमाननासिका अव-

क्रचसंयोगोपान्त्यादिति किं पृथुजवना चारुगुल्फा स्वाङ्गादिति किं बहुशोभा पुरी बहुशोफा जरती बहुकफा बहुज्ञाना कन्या । अत इति किं कल्याणपाणिः ॥

श्लोकः ॥ अविकारोऽद्रवं मूर्त्तं प्राणिस्थं स्वाङ्गमुच्यते ।
च्युतं च प्राणिनस्तत्तन्निभं च प्रतिमादिषु ॥

**द्विगोः** ॥ १८ ॥ अदन्ताद् द्विगोः स्त्रियां ङी भवति । त्रिलोकी अष्टसहस्री ॥

**नः पत्यन्तस्य** ॥ १९ ॥ पत्यन्तस्य स्त्रियां नो वा भवति । नान्तत्वे । नृदुगिदिति ङी दृढपत्नी दृढपतिः ॥

**सपत्न्यादौ** ॥ २० ॥ सपत्न्यादिः स्त्रियां साधुर्वेदितव्यः । सपत्नी एकपत्न्यादिः ॥

**पतिवत्न्यन्तर्वत्न्यावविधवागर्भिण्योः** ॥ २१ ॥ अविधवायां पतिवत्नीति निपात्यते गर्भिण्यामन्तर्वत्नीति ॥

**रोहिणरेवतान्नक्षत्रे** ॥ २२ ॥ रोहिणरेवताभ्यां स्त्रियां ङी भवति नक्षत्रे वाच्ये । रोहिणी रेवती नक्षत्र इति किं । रोहिणा रेवता ॥

**नीलात्प्राण्योषध्योः** ॥ २३ ॥ नीलशब्दात् स्त्रियां ङी भवति प्राण्योषध्यो चार्थे । नीली गौः नील्योषधिः । अन्यत्राङ् । नीला मेघमाला ॥

**आर्यक्षत्रियाद्वान्** ॥ २४ ॥ आर्यक्षत्रियशब्दाभ्यां स्त्रियामान्प्रत्ययो वा भवति । नान्तत्वे ङी पक्षे आङ् आर्याणी आर्या क्षत्रियाणी क्षत्रिया ॥

**धवाद्योगादज्येष्ठादिभ्यः** ॥ २५ ॥ धववाचिनो योगात्तत्सम्बन्धात् स्त्रियां वर्तमानाच्छब्दात् ङी भवति न ज्येष्ठादिभ्यः । गणकस्य भार्या गणकी

क्षत्रियस्य भार्या क्षत्रियी अज्येष्ठादिभ्य इति किं ज्येष्ठस्य भार्या ज्येष्ठा एवं कनिष्ठा ॥

**पूतक्रत्वग्निवृषाकपिकुसितकुसीदादैङ् च** ॥ २६ ॥ पूतक्रत्वादिभ्यो धवयोगात् स्त्रियां वर्तमानेभ्यो ङी भवति तेषामैङ् चादेशः । ङ इत् आदेशत्वज्ञापनार्थः आय् पूतक्रतोर्भार्या पूतक्रतायी एवमग्नायी वृषाकपायी कुसितायी कुसीदायी ॥

**मनोर्वा ङैच्** ॥ २७ ॥ मनुशब्दाद्धवयोगात् स्त्रियां ङी वा भवति ङैश्चान्तादेशः । ङ इत् मनायी मनावी मनुः ॥

**मातुलाचार्योपाध्यायादान् च** ॥ २८ ॥ मातुलादिभ्यो धवयोगात् स्त्रियां ङी आन् च भवतो वा । नान्तत्वे पुनर्ङी पक्षे आङ् । मातुलस्य भार्या मातुली मातुलानी मातुला एवम् आचार्यी आचार्यानी क्षुभ्नादित्वान्न णत्वं आचार्या उपाध्यायी उपाध्यायानी उपाध्याया ॥

**वरुणेन्द्रमृडभवशर्वरुद्रादान्** ॥ २९ ॥ वरुणादिभ्यो धवयोगे स्त्रियां नित्यमान् भवति । ङी । वरुणस्य भार्या वरुणानी एवमिन्द्राणी मृडानी भवानी शर्वाणी रुद्राणी ॥

**हिमारण्यादुरौ** ॥ ३० ॥ उरौ महत्त्वर्थे वर्तमानाभ्यां हिमारण्यशब्दाभ्यां स्त्रियामान् भवति । ङी उरु हिमं हिमानी उर्वरण्यमरण्यानी ॥

**वेदक्तिनो ङी** ॥ ३१ ॥ स्त्रियामिदन्तात् ङी वा भवति न क्तिनः । दीर्घः । शक्तिः शक्ती यष्टिः यष्टी अङ्गुलिः अङ्गुली । अक्तिन इति किं कृतिः बुद्धिः ॥

**गुणादुतोऽचोऽखरोः** ॥ ३२ ॥ अचः परो यः उत् तदन्ताद्गुणवाचिनः स्त्रियां ङी वा भवति न खरोः । यत्र् मृद्वी मृदुः पट्वी पटुः । गुणादिति किं

आखुरियम् इषुरियं चिकीर्षुरियम् । अखरोरिति किं खरुरियम् । अच इति किं पाण्डुरियं बभ्रुरियं ॥

**वक्रादेः** ॥ ३३ ॥ वक्रादिभ्यः स्त्रियां ङी वा भवति । वक्री बहुः पद्धती पद्धतिः चण्डी चण्डा कल्याणी कल्याणा ॥

**क्नोऽसितपलितात्** ॥ ३४ ॥ असितपलिताभ्यां वर्णवाचिभ्यां स्त्रियां ङी वा भवति तकारस्य क्नादेशश्च । असिक्नी असिता पलिक्नी पलिता ॥

**कालशबलसारङ्गपिशङ्गपिङ्गलकल्माषात्** ॥ ३५ ॥ कालादिभ्यो वर्णवाचिभ्यः स्त्रियां नित्यं ङी भवति । काली शबली सारङ्गी पिशङ्गी पिङ्गली कल्माषी ॥

**जातेरस्त्रीयशूद्रात्** ॥ ३६ ॥ अदन्ताज्जातिवाचिनः स्त्रियां ङी भवति स्त्रीलिङ्गं यान्तं शूद्रशब्दं च वर्जयित्वा । कुक्कुटी तटी हरीतकी विभीतकी आमलकी । अस्त्रीयशूद्रादिति किं यूका क्षत्रिया शूद्रा । जातेरिति किं । धवला देवदत्ता जाता ॥

**नुरितः** ॥ ३७ ॥ इदन्तान्मनुष्यजातिवाचिनः स्त्रियां ङी भवति । कुन्ती दाक्षी ॥

**ऊरुतोऽप्राणिनश्चायुरज्ज्वादिभ्यः** ॥ ३८ ॥ मनुष्यजातिवाचिनः अप्राणिजातिवाचिनश्च स्त्रियामुदन्तादूङ् भवति युशब्दान्तं रज्ज्वादींश्च वर्जयित्वा । कुरूः इक्ष्वाकूः अलाबूः कर्कन्धूः । अप्राणिन इति किम् आखुः । अयुरज्ज्वादिभ्य इति किम् अध्वर्युरियं रज्जुः हनुः ॥

**ऊरूत्तरपदादौपम्ये** ॥ ३९ ॥ ऊरूत्तरपदात् स्त्रियाम् ऊङ् भवति औपम्ये द्योत्ये । रम्भास्तम्भोरूः करिकरवृत्तोरूः ॥

**सहसफसहितसंहितलक्ष्मणवामादेः** ॥ ४० ॥ सहादिपूर्वादूरूत्तर-

पदात् स्त्रियाम् ऊङ्भवति। सहोरूः सफोरूः सहितोरूः संहितोरूः लक्ष्मणोरूः वामोरूः ॥

**नारी सखी पङ्गूश्वश्रूः** ॥ ४१ ॥ एते स्त्रियाम् प्रत्ययान्ता निपात्यन्ते। नारी सखी पङ्गूः श्वश्रूः ॥

**यूनस्तिन्** ॥ ४२ ॥ युवन्शब्दात् स्त्रियां तिद्भवति। न इत् ष्यत्प्रत्याहारार्थः। न इति नलुक्। पुनः वेदक्तिनो ङीति ङी न भवति। युवतिः ॥

॥ इति स्त्रीप्रत्ययान्तसङ्ग्रहः ॥

---

## ॥ अथ विभक्त्यर्थाः संगृह्यन्ते ॥

**त्रयीत्रयी विभक्तिः** ॥ १ ॥ स्वादीनां त्रयीत्रयी विभक्तिर्भवति ॥

**प्रथमादिः** ॥ २ ॥ सा विभक्तिः प्रथमा द्वितीयेत्यादिसंज्ञा भवत्या सप्तम्याः। कस्मिन्नर्थे प्रथमा ॥

**योगे** ॥ ३ ॥ योगे सम्बन्धे पदानां परस्परापेक्षालक्षणे गम्यमाने इतो वक्ष्यमाणं कार्यं भवति। इति वेदितव्यम् एकद्विबहाविति प्रधानार्थे प्रथमाविभक्तिर्भवति। धर्मः धर्मौ धर्माः। सुखयति सुखयतः सुखयन्ति इत्यादिक्रियायोगो द्रष्टव्यः। आमन्त्रणेऽपि आमन्त्र्ये इति प्रथमैव। हेधर्म हेधर्मौ हेधर्माः। मां रक्ष मां रक्षतं मां रक्षत इत्यादिक्रियासम्बन्धो योज्यः ॥ कस्मिन्नर्थे द्वितीया ॥

**हाधिक्समयानिकषोपर्युपर्यध्यधोऽधोऽत्यन्तरान्तरेणतस्पर्यभिसर्वोभयेष्वाप्रधानेऽमौट्शस्** ॥ ४ ॥ हादिभिस्तसन्तैश्च पर्यादिभिर्योगेऽप्रधाने अनभिहितेऽर्थे वर्तमानादमौट्शसो भवन्ति। हा चैत्रं वर्धते

व्याधिः। धिक् चैत्रं विकृतं। पर्वतं समया नदी वहति। ग्रामं निकषा वनं। स्वर्गमुपर्युपरि स्वर्गाः। लोकमध्यधि जीवाद्यर्थाः। नरकभूमिमधोऽधो नरकभूमयः। अति वृद्धन्तु कुरून् महद् बलं। निषधं नीलं चान्तरा विदेहाः। धर्ममन्तरेण न वै सुखं। ग्रामं परितो वनानि। ग्राममभितो ग्रामाः। ग्रामं सर्वतो ग्रामाः। सीतामुभयतः प्राग्विदेहाः। चकारादनुक्तेऽपि। बुभुक्षितं न प्रति भाति किञ्चित् इत्यादि ॥

**वीप्स्यलक्षणेत्थंभवनेष्वभिना** ॥ ५ ॥ साकल्येन व्याप्तीच्छा वीप्सा तत्कर्म वीप्स्यं लक्ष्यते वस्तु येन तल्लक्षणम् इत्थंभावविषयः इत्थंभवनम् एष्वप्रधानार्थेषु वर्तमानात् द्वितीया भवत्यभिना योगे। वृक्षंवृक्षमभि सिञ्चति। वृक्षंवृक्षमभि विद्योतते विद्युत्। मातरमभि साधुश्चैत्रः ॥

**भागिनि च प्रतिपर्यनुभिः** ॥ ६ ॥ भागोऽस्यास्तीति भागी तस्मिन् वीप्स्यादिषु चार्थेषु द्वितीया प्रतिपर्यनुभिर्योगे। मां प्रति मां परि मामनु देवदत्त यत्तद्देयं वृक्षंवृक्षं प्रति वृक्षंवृक्षं परि वृक्षंवृक्षमनु सिञ्चति। वृक्षं प्रति वृक्षं परि वृक्षमनु विद्योतते विद्युत्। मातरं प्रति मातरं परि मातरमनु साधुश्चैत्रः ॥

**उत्कृष्टेऽनूपेन** ॥ ७ ॥ उत्कृष्टेऽधिकेऽप्रधानेऽर्थे वर्तमानात् द्वितीया भवति अनूपाभ्यां योगे। अनु समन्तभद्रं तार्किकाः उप शाकटायनं वैयाकरणाः॥ कर्मणीति क्रियाविषये अप्रधाने द्वितीया भवति। तच्च कर्म द्विविधं। निर्वर्त्यं गम्यं चेति। कार्यविकार्यप्रध्वंस्यादिकं निर्वर्त्यं। प्राप्यप्रकाश्यज्ञेयादिकं गम्यं। घटं करोति शरं लुनाति दुरितं हन्ति वनं दहति। ग्रामं गच्छति गृहं प्रकाशयति दीपः अर्थं जानाति शिष्यं प्रबोधयति इत्यादि ॥

**दिवः करणे वा** ॥ ८ ॥ दिवो धातोः करणेऽप्रधाने वर्तमानात् द्वितीया वा भवति। अक्षान् दीव्यति अक्षैर्दीव्यति ॥

**पणव्यवह्रोः** ॥ ९ ॥ पणतेर्व्यवहरतेश्च कर्म कर्म वा भवति। शतं पणते शतस्य पणते शतं व्यवहरति शतस्य व्यवहरति ॥

**स्मृत्यर्थदयीशां कर्म** ॥ १० ॥ स्मृत्यर्थानां धातूनां दयीश्योश्च यत्कर्म तद्वा कर्म भवति। कर्मत्वे द्वितीया अन्यत्र षष्ठी धर्मं स्मरति धर्मस्य स्मरति देवं ध्यायति देवस्य ध्यायति इत्यादि धर्मं दयते धर्मस्य दयते लोकमीष्टे लोकस्येष्टे॥

**कृञः प्रतियत्ने** ॥ ११ ॥ प्रतियत्ने अर्थे कृञः कर्म कर्म वा भवति। एधो दकमुपस्कुरुते एधो दकस्योपस्कुरुते ॥

**हिंसायां जासनाटक्राथपिषनिप्रह्नां** ॥ १२ ॥ हिंसायां वर्तमानानाम् एतेषां कर्म वा कर्म भवति। चोरमुज्जासयति चोरस्योज्जासयति चोरमुन्नाटयति रोरस्योन्नाटयति चोरमुत्क्राथयति चोरस्योत्क्राथयति चोरं पिनष्टि चोरस्य पिनष्टि चोरं निहन्ति चोरस्य निहन्ति चोरं प्रहन्ति चोरस्य प्रहन्ति चोरं निप्रहन्ति चोरस्य निप्रहन्ति ॥

**आशिषि नाथः** ॥ १३ ॥ नाथतेः कर्म वा कर्म भवति आशिषि गम्यमानायां । धर्मं नाथते धर्मस्य नाथते धर्मो मे भूयादित्याशास्त इति अर्थः ॥

**शीङ्स्थासोऽधेराधारः** ॥ १४ ॥ अधिपूर्वाणां शीङ् स्था आस् इत्येतेषां धातूनाम् आधारः कर्म भवति। धर्ममधिशेते धर्ममधितिष्ठति धर्ममध्यास्ते ॥

**वसोऽनूपाध्याङः** ॥ १५ ॥ अनूपाध्याङ्पूर्वस्य वसतेराधारः कर्म भवति। धर्ममनुवसति धर्ममुपवसति धर्ममधिवसति धर्ममावसति ॥

**अभिनिविशश्च** ॥ १६ ॥ अभिनिपूर्वस्य विशेराधारः कर्म भवति । धर्ममभिनिविशते चशब्दात् क्वचिन्न भवति अर्थेऽभिनिविशते ॥

**कालाध्वभावदेशं वा कर्म चाकर्मणाम्** ॥ १७ ॥ अकर्मकाणां धा-

तूनाम् आधारः कालाध्वक्रियादेशरूपः कर्म वा भवति अकर्म च । मासमास्ते क्रोशं स्वपिति गोदोहमास्ते ग्रामं वसति । पक्षे सप्तमी मासे आस्ते इत्यादि ॥

**कालाध्वनोर्व्याप्तौ** ॥ १८ ॥ कालाध्वनोर्द्वितीया भवति व्याप्तौ नैरन्तर्ये गम्यमाने । मासमध्यगीष्ट क्रोशं गिरिः ॥ कस्मिन्नर्थे तृतीया ॥

**टाभ्यांभिस्सिद्धौ** ॥ १९ ॥ कालाध्वनोरप्रधानयोर्वर्तमानात् टाभ्यांभिसो भवन्ति सिद्धौ क्रियानिष्पत्तौ गम्यमानायां । मासेन व्याकरणमध्यगीष्ट क्रोशेन सूत्रपाठमामनत् । हेतुकर्तृ इत्यादिना हेत्वादिष्वप्रधानेषु वर्तमानात्तृतीया भवति। कारणं हेतुः तत्र धर्मेण सुखं विद्यया यशः । स्वतन्त्रः कर्ता तत्र चैत्रेण क्रियते कटः आत्मना स्थीयते । साधकतमं करणं तत्र देवदत्तः परशुना च्छिनत्ति आत्मा ज्ञानेन परिच्छिनत्ति । अर्थविशेषचिह्नमित्थंभूतलक्षणं श्वेतच्छत्रेण राजानमद्राक्षीत् ज्ञानेनात्मा लक्ष्यते ॥

**सहार्थेन** ॥ २० ॥ सहार्थेन युक्तात् तृतीया भवति। पुत्रेण सहागतः पुत्रेण सह स्थूलः पुत्रेण सार्धं पुत्रेण साकं पुत्रेण समं पुत्रेण सत्रा पुत्रेणामा भुङ्क्ते ॥

**यद्भेदैस्तद्वदाख्या** ॥ २१ ॥ यस्य भेदैः प्रकारैः तद्वतोऽर्थस्याख्या संज्ञा भवति तस्मिन् प्रकारवत्यप्रधाने अर्थे वर्तमानात्तृतीया भवति । अक्ष्णा काणः जात्या क्षत्रियः ॥

**प्रसितावबद्धोत्सुकैः** ॥ २२ ॥ प्रसितादिभिर्युक्ते आधारे वर्तमानात् तृतीया वा भवति । पक्षे सप्तमी केशैः प्रसितः केशेषु प्रसितः केशैरवबद्धः केशेष्ववबद्धः धर्मेणोत्सुकः धर्मे उत्सुकः तत्रासक्त इत्यर्थः ॥ कस्मिन्नर्थे चतुर्थी ॥ ङेभ्यांभ्यसिति सम्प्रदाने अप्रधानेऽर्थे वर्तमानात् ङेभ्यांभ्यसो भवन्ति । वृक्षाय जलं ददाति साधुभ्यो दानं वितरति राज्ञे दण्डं वितरति छात्राय चपेटां ददाति मातापितृभ्यां कशिपू प्रयच्छते मृगेभ्यः तोयं वितरति ॥

**स्थानिवुणः** ॥ २३ ॥ यस्याप्रयुक्तस्यार्थः प्रतीयते सः स्थानी तस्य वुगन्तस्य कर्मणि वर्तमानाच्चतुर्थी भवति। एधेभ्यो व्रजति एधानाहारको व्रजतीत्यर्थः ॥

**क्रुद्द्रुहेर्ष्यासूयार्थैर्यं प्रति कोपो न च कर्म** ॥ २४ ॥ क्रोधाद्यर्थैर्धातुभिर्युक्ते यं प्रति कोपो भवति तस्मिन्नप्रधाने अर्थे वर्तमानाच्चतुर्थी भवति तद्विषयः कर्म न भवति च। देवदत्ताय क्रुध्यति देवदत्ताय कुप्यति देवदत्ताय द्रुह्यति देवदत्ताय अपचिकीर्षति देवदत्ताय ईर्ष्यति देवदत्तायासूयति। न च कर्मेति किं देवदत्ताय कुप्यते ॥

**क्रुद्द्रुहान्नोपसर्गात्** ॥ २५ ॥ उपसर्गात्पराभ्यां क्रुद्द्रुहाभ्यां युक्ताच्चतुर्थी न भवति। चैत्रमभिक्रुध्यति चैत्रमभिद्रुह्यति ॥

**स्पृहेर्वा** ॥ २६ ॥ स्पृहेर्धातोः कर्मणि वर्तमानाच्चतुर्थी वा भवति। धर्माय स्पृहयति धर्मं स्पृहयति ॥

**मन्यस्याकाकादिषु यतोऽवज्ञा** ॥ २७ ॥ यस्मादवज्ञाऽन्यस्य ज्ञायते तस्मिन् मन्यतेः कर्मणि वर्तमानाच्चतुर्थी वा भवति न काकादेः। तृणाय मन्यते भोगान्। तृणं मन्यते भोगान्। अकाकादिष्विति किं। काकं मन्यते याचकं ॥

**भद्रायुष्यक्षेमसुखार्थहितार्थहितैराशिषि** ॥ २८ ॥ भद्राद्यर्थैर्हितशब्देन युक्ते अप्रधाने अर्थे वर्तमानाच्चतुर्थी वा भवति आशिषि प्रयुज्यमानायां। पक्षे षष्ठी धर्माय भद्रमस्तु धर्मस्य वा धर्माय शुभमस्तु धर्मस्य वा चैत्रायायुर्भूयात् चैत्रस्य वा चैत्राय जीवितं भूयात् चैत्रस्य वा धर्माय क्षेमं भूयात् धर्मस्य वा धर्माय कुशलं भूयात् धर्मस्य वा सङ्घाय सुखमस्तु सङ्घस्य वा सङ्घाय शर्मास्तु सङ्घस्य वा चैत्रायार्थो जायतां चैत्रस्य वा चैत्राय

फलं सम्पद्यतां चैत्रस्य वा चैत्राय हितमस्तु चैत्रस्य वा चैत्राय पथ्यं भूयात् चैत्रस्य वा ॥

**शक्तार्थवषण्नमःस्वस्तिस्वाहास्वधाहितैः** ॥२९॥ शक्तार्थैर्वषडादिभिश्च युक्तेऽप्रधानार्थे वर्तमानाच्चतुर्थी नित्यं भवति । चैत्राय शक्तो मैत्रः मल्लाय प्रभवति मल्लः पुरुषायालं युवतिः अग्नये वषट् अर्हते नमः धर्माय स्वस्ति इन्द्राय स्वाहा गुरुभ्यस्स्वधा सर्वस्मै हितं ॥

**रुचिक्लृप्यर्त्थधारिभिः प्रेयविकारोत्तमर्ण्णेषु** ॥३०॥ रुच्यर्त्थैर्धातुभिर्युक्ते प्रेये क्लृप्यर्त्थैर्विकारे धारिणा चोत्तमर्ण्णे वर्तमानाच्चतुर्थी भवति । साधवे रोचते धर्मः सुदृशे स्वदते तत्त्वं श्लेष्मणे कल्पते दधि बन्धाय जायते रागः चैत्राय शतं धारयते मैत्रः ॥

**उत्पातेन ज्ञाप्ये** ॥३१॥ उत्पातेन ज्ञाप्ये वर्तमानाच्चतुर्थी भवति ॥

॥ श्लोकः ॥ वाताय कपिला विद्युदातपायातिलोहिनी ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत् ॥

**श्लाघह्नुङ्स्थाशपा प्रयोज्ये** ॥३२॥ श्लाघादिभिर्युक्ते प्रयोज्ये वर्तमानाच्चतुर्थी भवति । देवदत्ताय श्लाघते । स्वगुणादिकं धर्मं विज्ञापयितुमिच्छतीत्यर्त्थः चैत्राय ह्नुते नास्ति न जाने न मया कृतमिति तस्य ज्ञापयतीत्यर्थः । छात्रेभ्यस्तिष्ठते कन्या स्वाभिप्रायं ज्ञापयतीत्यर्त्थः मैत्राय शपते पित्राद्यस्पर्शनादिना शपथं करोतीत्यर्त्थः ॥

**गर्ल्हादिभिर्बहुलं** ॥ ३३ ॥ गर्ल्हादिभिर्धातुभिर्युक्ते अप्रधानेऽर्त्थे वर्तमानाच्चतुर्थी बहुलं यथासम्भवं भवति । पापाय गर्ल्हते । युद्धाय सन्नह्यते । चैत्राय कथयति । क्वचिन्न भवति । मनसा निगर्ल्हते क्वचिद्विकल्पः चैत्राय धर्मं ब्रूते चैत्रं वा । शास्त्रे प्रणमति शास्तारं वा ॥

क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति ॥

**यदर्थं** ॥ ३४ ॥ यत्प्रयोजनं किञ्चिद्विवक्ष्यते तस्मिन्नप्रधानेऽर्थे वर्तमानाच्चतुर्थी भवति । रथाय दारु रन्धनाय स्थाली ॥ कस्मिन्नर्थे पञ्चमी ॥

**ङसिभ्यांभ्यस्स्तोकाल्पकतिपयकृच्छ्रादसत्त्वे** ॥ ३५ ॥ असत्त्वे अद्रव्ये वर्तमानेभ्यः स्तोकादिभ्यः ङसिभ्यांभ्यसो भवन्ति वा । पक्षे करणत्वात् तृतीया स्तोकान्मुक्तः स्तोकेन मुक्तः अल्पान्मुक्तः अल्पेन मुक्तः कतिपयान्मुक्तः कतिपयेन मुक्तः कृच्छ्रात्पठति कृच्छ्रेण पठति । असत्त्व इति किं । स्तोकेन विषेण हतः ॥

**आरादर्थैः** ॥ ३६ ॥ दूरार्थैस्समीपार्थैश्च युक्तात्पञ्चमी वा भवति । पक्षे षष्ठी ग्रामाद्दूरं ग्रामस्य दूरं ग्रामाद्विप्रकृष्टं ग्रामस्य वा ग्रामादन्तिकं ग्रामस्य वा ग्रामात्समीपं ग्रामस्य वा ॥

**हेतौ गुणेऽस्त्रियाम्** ॥ ३७ ॥ अस्त्रीलिङ्गे हेतौ गुणे द्रव्याश्रये धर्मे वर्तमानात्पञ्चमी वा भवति । रत्नत्रयान्मोक्षः रत्नत्रयेण वा भवति अज्ञानाद्बन्धः अज्ञानेन वा अस्त्रियामिति किं बुद्ध्या व्यवहरति ॥

**ऋणे** ॥ ३८ ॥ हेतौ ऋणे वर्तमानात्पञ्चमी नित्यं भवति । शताद्बद्धः सहस्राद्बद्धः । अपादाने अपायेऽवधाविति पञ्चमी । ग्रामादपैति वृक्षादवतरति धर्मादपैति पापाद्बिभेति साधुः । कुसूलात्पचति । ततो गृहीत्वा पचतीत्यर्थः ॥

**आख्यातर्युपयोगे** ॥ ३९ ॥ उपयोगो नियमपूर्वकं विद्याग्रहणं तस्मिन् गम्यमाने आख्यातर्यप्रधानेऽर्थे वर्तमानात्पञ्चमी भवति । उपाध्यायादधीते । अचार्याच्छृणोति ॥

**आङा** ॥ ४० ॥ आङा युक्तात्पञ्चमी भवति अवधौ । आग्रामात् गच्छति । आसूत्रप्रद्म्यो यशो गतं समन्तभद्रस्य ॥

**वर्ज्येऽपपरिणा** ॥ ४१ ॥ अपपरिभ्यां युक्ताद्वर्ज्येऽर्थे वर्तमानात्पञ्चमी भवति । अपग्रामाद्वर्षति । परिग्रामाद्वर्षति ॥

**प्रतिनिधिप्रतिदाने प्रतिना** ॥ ४२ ॥ प्रतिना युक्तात्पञ्चमी भवति प्रतिनिधौ प्रतिदाने च गम्यमाने । वासुदेवात्प्रति प्रद्युम्नः । तिलेभ्यः प्रति माषानाददाति ॥

**स्यानिष्यकर्माधारे** ॥ ४३ ॥ स्यानिष्यान्तस्य कर्मण्याधारे च वर्तमानात्पञ्चमी भवति । प्रासादात्प्रेक्षते आसनात्प्रेक्षते प्रासादमारुह्य आसने उपविश्य प्रेक्षत इत्यर्थः ॥

**दिक्छब्दान्यार्थाराद्बहिरितरैः** ॥ ४४ ॥ दिक्छब्दैरन्यार्थैराराद्बहिरितरैश्च युक्तात्पञ्चमी भवति । ग्रामात्पूर्वः ग्रामादपरः ग्रामाद्दक्षिणः ग्रामादुत्तरः मासात्पूर्वं बाल्यात्परं चैत्रादन्यः चैत्राद्भिन्नः ग्रामादारात् ग्रामाद्बहिः चैत्रादितरः ॥ कस्मिन्नर्थे षष्ठी । ङसोसामिति योगे अप्रधानेऽर्थे वर्तमानात् षष्ठी भवति । राज्ञः पुत्रः राज्ञः पुरुषः चैत्रस्य पुत्रः अपवादविनिर्मुक्तोऽस्य विषयः ॥

**स्तात्ता** ॥ ४५ ॥ स्तात्प्रत्याहारगृहीतप्रत्ययान्तैर्युक्तात् षष्ठी भवति । ग्रामस्य परस्तात् ग्रामस्य दक्षिणतः ग्रामस्याधरात् ग्रामस्य पश्चात् ग्रामस्य पुरः ग्रामस्य पुरस्तात् ग्रामस्योपरि ग्रामस्योपरिष्टात् ॥

**करणे ज्ञोऽज्ञाने** ॥ ४६ ॥ अज्ञानार्थस्य जानातेः करणेऽर्थे वर्तमानात् षष्ठी भवति । धर्मस्य जानीते धर्मेण वर्तत इत्यर्थः ॥

**कृत्कामुकखावुण्लक्तण्खात्र्थाव्ययैर्व्यद्रूपेणेनः कर्मकर्त्रोः** ॥ ४७ ॥

कृदन्तस्य कामुकशब्दस्य च कर्मणि कर्तरि चाप्रधानेऽर्थे वर्तमानात् षष्ठी भवति न वुणादेः। धर्मस्य प्रणेता कर्म। भूभृतां भेत्ता भगवतो देशना गुरोरासिका विद्यायाः कामुकः। न वुणादेरिति किं। वुण् एधानाहारको व्रजति धर्मं कुर्वन्। क्तादारभ्य आ उकणः क्तण्। धर्मः कृतो देवदत्तेन धर्मं कृतवान् देवदत्तः। धर्मं यजमानः। तर्कमधीयन्। धर्मं वदिता। धर्ममभिलाषुकः। खार्थ्यः सुकरो धर्मो भवता सुज्ञानं शास्त्रं भवता। अव्ययं। धर्मं ज्ञात्वा धर्मं कर्तुं। एष्यदिन्। ग्रामङ्गमी। ऋणेन् शतं धारी॥

**क्तस्य सदाधारे** ॥ ४८॥ वर्तमाने आधारेऽपि विहितो यः क्तः तदन्तस्य कर्मणि कर्तरि च वर्तमानात् षष्ठी भवति। राज्ञां मतः। सक्तूनां पीतं गुरूणामासितं॥ कस्मिन्नर्थे सप्तमी॥

**क्तेनो ङ्योःसुप्** ॥ ४९॥ क्तेनन्तस्य कर्मण्यप्रधाने वर्तमानात् ङ्योरसुपो भवन्ति। धर्मे कृती प्रवचनेऽधीती॥

**हेतौ कर्मणा** ॥ ५०॥ कर्मणा युक्ते हेतौ वर्तमानात् सप्तमी भवति। मोक्षे धर्ममाराधयति। ज्ञाने प्रवचनमधीते॥

श्लोकः। चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।
वालेषु चमरीं हन्ति सीम्नि पुष्क(सीम)लको हतः॥

**स्वेशेऽधिना** ॥ ५१॥ अधिना युक्तात् स्वे ईश्वरे च वर्तमानात् सप्तमी भवति। अधिमगधेषु श्रेणिकः अधिश्रेणिके मगधाः। आधारे इति अप्रधाने अधिकरणे वर्तमानात् सप्तमी भवति। धर्मे आस्ते गृहे शेते स्थाल्यां पचत्योदनं॥

**सुजर्थैः काले वा** ॥ ५२॥ सुजर्थैर्युक्ते काले आधारे वर्त्तमानात् सप्तमी वा भवति। द्विरह्नि भुङ्क्ते द्विरह्नो भुङ्क्ते॥

**स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च** ॥ ९३ ॥ स्वाम्यादिभिर्युक्तात् सप्तमी वा भवति । पक्षे षष्ठी । गोषु स्वामी । गोष्वीश्वरः गोष्वधिपतिः । गोषु दायादः । गोषु साक्षी । गोषु प्रतिभूः । गोषु प्रसूतः । गवां स्वामीत्यादिः ॥

**यद्भावो भावलक्षणं** ॥ ९४ ॥ भावः क्रिया यस्य भावो भावान्तरस्य लक्षणं ज्ञापकं भवति तस्मिन्नर्थे वर्त्तमानात् सप्तमी भवति । गोषु दुह्यमानासु गतः दुग्धास्वागतः ॥

**षष्ठी चानादरे** ॥ ९५ ॥ यस्य भावो भावान्तरस्य लक्षणं तस्मात् सप्तमी षष्ठी च भवतोऽनादरे गम्यमाने । रुदति लोके प्राव्राजीत् रुदतो लोकस्य प्राव्राजीत् ॥

**कारकमध्येऽध्वकाले पञ्चमी च** ॥ ९६ ॥ द्वयोः कारकयोर्मध्ये अध्वनि काले च वर्तमानात् सप्तमी पञ्चमी च भवतः । बाणोऽयं क्रोशे लक्ष्यं विध्यति बाणोऽयं क्रोशाल्लक्ष्यं विध्यति । मुनिरयं द्व्यहे भोक्ता मुनिरयं द्व्यहाद् भोक्ता ॥

**चेष्टागत्याप्येऽनाक्रान्ते द्वितीयाचतुर्थ्यौ** ॥ ९७ ॥ चेष्टारूपायाः गतेराप्ये कर्मणि वर्तमानात् द्वितीयाचतुर्थ्यौ भवतः नाक्रान्ते । ग्रामं गच्छति ग्रामाय गच्छति । अनाक्रान्त इति किं स्त्रियं गच्छति आक्रम्य भुङ्क्त इत्यर्थः । चेष्टागत्याप्य इति किं । ग्रामं मनसा प्रपद्यते ॥

**तुल्यार्थैस्तृतीया** ॥ ९८ ॥ तुल्यार्थैर्युक्तात्तृतीया भवति । मात्रा तुल्यः पित्रा समानः ॥

**षष्ठी** ॥ ९९ ॥ तुल्यार्थैर्युक्तात् षष्ठी भवति । मातुस्तुल्यः पितुस्समानः ॥

**द्वितीया चैनेनानञ्चेः** ॥ ६० ॥ एनप्रत्ययान्तेन युक्तात् द्वितीया षष्ठी च भवतः नाञ्चेः । ग्रामं पूर्वेण ग्रामस्य पूर्वेण अनञ्चेरिति किं प्राग्ग्रामात् ॥

**पञ्चमी चर्ते** ॥ ६१ ॥ ऋतेयुक्तात् द्वितीयापञ्चम्यौ भवतः । ऋते धर्मं कुतस्सुखम् । ऋते धर्माद्वा ॥

**पृथङ्नाना तृतीया च** ॥ ६२ ॥ पृथग्नानायुक्तात् तृतीयापञ्चम्यौ भवतः । पृथग् देवदत्तेन देवदत्ताद्वा । नाना देवदत्तेन देवदत्ताद्वा ॥

**विनेमास्तिस्रः** ॥ ६३ ॥ विनायुक्तात् इमा अनन्तरोक्तास्तिस्रो विभक्तयो द्वितीयातृतीयापञ्चम्यो भवन्ति । विना धर्मं विना धर्मेण विना धर्माद्वा कुतस्सुखं ॥

**सप्तमी चासत्त्वारादर्थात्** ॥ ६४ ॥ अद्रव्यवाचिनो दूरान्तिकार्थात् द्वितीयातृतीयापञ्चमीसप्तम्यो भवन्ति । ग्रामस्य दूरं दूरेण दूरात् दूरे वा गच्छति । ग्रामस्य समीपं समीपेन समीपात् समीपे वा गच्छति ॥

**हेतौ हेत्वर्थैः सर्वाः प्रायः** ॥ ६५ ॥ हेत्वर्थैर्युक्ते हेतौ वर्तमानात् प्रायेण सर्वा विभक्तयो भवन्ति । धर्मेण हेतुना धर्माय हेतवे धर्माद्धेतोः धर्मस्य हेतोः धर्मे हेतौ वर्तते । एवं किं निमित्तं किं कारणम् इत्यादि ॥

॥ इति कारकसंग्रहः ॥

---

## ॥ अथ समाससंग्रहोऽभिधीयते ॥

परस्परापेक्षाणां पूर्वोत्तरपदानां सुबन्तानां कथञ्चिदैकपद्यं समासः । स च षोढा । बहुव्रीहिरव्ययीभावस्तत्पुरुषः कर्मधारयो द्विगुर्द्वन्द्वश्चेति । तत्र बहुव्रीहिस्त्रिधा । उत्तरपदार्थप्रधानः उभयपदार्थप्रधानः अन्यपदार्थप्रधानश्चेति ।

तत्र उत्तरपदार्थप्रधानो यथा । द्वि दशन् इति स्थिते द्वि शब्दादौट् दशन्शब्दाज्जस् द्वौ वारौ दशेति विगृह्य । सुप्सुपा समासो बहुलमित्यधिकृत्य ॥

**सुज्वार्थे सङ्ख्या सङ्ख्यया सङ्ख्येये बहुव्रीहिः** ॥ १ ॥ वारः सुजर्थः विकल्पस्संशयो वा वार्थः । वाराद्यर्थेषु वर्तमानं सङ्ख्यावाचि सुबन्तं सङ्ख्येये वर्तमानेन सङ्ख्यावाचिना सुबन्तेन समस्यते स समासो बहुव्रीहिः ॥

**प्रत्ययस्य च सुपः श्लुक्** ॥ २ ॥ समासस्य प्रत्ययस्य च निमित्तस्य सुपः श्लुक् भवति ॥

**सूक्तं पूर्वं** ॥ ३ ॥ समासविधौ प्रथमानिर्दिष्टं पदं पूर्वं प्रयोज्यमिति द्विशब्दस्य पूर्वनिपातः । बहुव्रीहेः काष्ठेट इत्यधिकृत्य ॥

**प्रमाणीसङ्ख्याड्डः** ॥ ४ ॥ प्रमाणीशब्दान्तात्सङ्ख्यावाचिशब्दान्ताच्च बहुव्रीहेर्डप्रत्ययो भवति । ड इत् । अन्त्याजादिलुगर्थः बहुव्रीहेराश्रयलिङ्गत्वात्त्रिलिङ्ग्यां रूपं नेयम् अस्य बहुत्ववाचित्वाज्जसादयः द्विदशाः पुमांसः द्विदशाः स्त्रियः द्विदशानि वस्त्राणि एवं त्रिदशचतुर्दशादयः ॥ उभयपदार्थप्रधानो यथा द्वि त्रि इति स्थिते द्विशब्दादौ त्रिशब्दाज्जस् द्वौ वा त्रयो वेति विगृह्य सुज्वेति समासः सुपः श्लुक् ॥

**सङ्ख्याल्पा समासे** ॥ ५ ॥ समासे अल्पा सङ्ख्या महत्याः सङ्ख्यायाः पूर्वं निपततीति द्विशब्दस्य पूर्वनिपातः प्रमाणीति ड इत्यादि । द्वित्राः पुरुषाः द्वित्राः स्त्रियः द्वित्राणि वस्त्राणि एवं पञ्चषाः षट्सप्ताः सप्ताष्टाः अष्टनवाः नवदशाः दशैकादशाः इत्यादयः ॥ अन्यपदार्थप्रधानो यथा । उप विंशति इति स्थिते । उभाभ्यां सुः । उप समीपं गता विंशतिर्येषामिति विगृह्य ॥

**अव्ययम्** ॥ ६ ॥ अव्ययं सुबन्तं सङ्ख्यावाचिना सुबन्तेन सह समस्यते द्वितीयाद्यन्तान्यपदार्थेऽभिधेये स च समासो बहुव्रीहिः । शेषं प्रागवत् । प्रमाणीति डस्य ॥

**इजाद्यायात्तद्धितः** ॥ ७ ॥ इज्युद्र इत्यत आरभ्य आ आयप्रत्ययान्ताद्विहितः प्रत्ययस्तद्धितसंज्ञो भवतीति तद्धितसंज्ञायां ॥

**विंशतेस्तेर्डिति** ॥ ८ ॥ विंशतेस्तेर्लुग्भवति डिति तद्धिते परे। पुनरेरिति लुक्। उपविंशाः। एवमुपत्रिंशादयः। प्राप्त उदक ऊढ रथ उपहृत बलि उद्धृत ओदन आयत बाहु बहु वृक्ष उच्चैस् मुख इति स्थिते। प्राप्तादिभ्यः सुः आयतबाहुभ्यामौ बहुवृक्षाभ्यां जस् प्राप्तमुदकं यम् ऊढो रथो येन उपहृतो बलिर्यस्मै उद्धृत ओदनो यस्मात् आयतौ बाहू यस्य बहवो वृक्षा यस्मिन् उच्चैर्मुखं यस्येति क्रमेण विगृह्य ॥

**एकार्थं च** ॥ ९ ॥ एकार्थं समानाधिकरणमव्ययं च सुबन्तं सुबन्तेन सह समस्यते द्वितीयाद्यन्तान्यपदार्थेऽभिधेये स च समासो बहुव्रीहिः। सुपः श्लुक् ॥

**विशेषणसर्वादिसङ्ख्यं बहुव्रीहौ** ॥ १० ॥ विशेषणं सर्वादि सङ्ख्यावाचि च सुबन्तं बहुव्रीहौ पूर्वं प्रयोज्यं। भेदकं विशेषणं भेद्यं विशेष्यं प्राप्तोदको ग्रामः ऊढरथोऽनड्वान् उपहृतबलिर्यक्षः उद्धृतौदनः शरावः आयतबाहुः पुमान् बहुवृक्षो ग्रामः उच्चैर्मुखश्चैत्रः। सुप्रजाभ्यां सुः शोभना प्रजा अस्येति विगृह्य समासे ॥

**असप्रजायाः** ॥ ११ ॥ नञ् दुस् सु इत्येतेभ्यः परो यः प्रजाशब्दः तदन्ताद्बहुव्रीहेरस्वा भवति। एरिति लुक् सुप्रजाः सुप्रजसौ सुप्रजसः। इत्यादि। पक्षे न्यग्गोष्यत इति ह्रस्वः सुप्रजः। एवं दुःप्रजस्अप्रजस्शब्दौ ॥ अल्पामेधा अस्येति विगृह्य। समासे ॥

**अल्पाच्च मेधायाः** ॥ १२ ॥ नञ् दुस् इत्येतेभ्यः अल्पशब्दाच्च परो यो मेधाशब्दः तदन्ताद्बहुव्रीहेरस् भवति। अल्पमेधाः अल्पमेधसौ अल्पमे-

धसः इत्यादि ॥ एवमभेधस्दुर्मेधस्सुमेधस्शब्दाः ॥ तुल्या जातिर्येषामिति विगृह्य समासे ॥

**जातेश्छस्सामान्यवति** ॥ १३ ॥ जातिशब्दाद्बहुव्रीहेश्छप्रत्ययो भवति सामान्यवत्यर्थे । छ ईय् तुल्यजातीयाः एवं सजातीयः विजातीयः यज्जातीयः तज्जातीयादयः ॥ सुधर्मशब्दाभ्यां सुः शोभनो धर्मोऽस्येति विगृह्य प्राग्वत्समासः ॥

**धर्मादन् द्विपदात्** ॥ १४ ॥ धर्मशब्दान्ताद्विपदबहुव्रीहेरन् भवति ॥

**न वृत्त्यन्तः** ॥ १५ ॥ समासान्तं पदं पदसंज्ञं न भवति ॥

**एः** ॥ १६ ॥ अपदान्तेऽवर्णेवर्णयोर्लुग्भवति तद्धिते परे । पुनस्ततः स्यादयः सुधर्मा सुधर्माणौ सुधर्माणः इत्यादि एवम् अनन्तधर्मन्नित्यादयः । द्विपदादिति किं । कृतसर्वधर्मः ॥ समानो धर्मोऽस्येति बहुव्रीहौ ॥

**सः समानस्य धर्मादिषु च** ॥ १७ ॥ समासे समानशब्दस्य सो भवति धर्मादिषु दृगादिषु च परेषु । सधर्मा सपक्षः सदेशः इत्यादि ॥ चित्रागोशब्दाभ्यां जस् चित्रा गावोऽस्येति विगृह्य पूर्ववत्समासादि ॥

**मानिस्त्र्येकार्थ्येयोः स्त्र्यन्यतोऽनूः** ॥ १८ ॥ अन्यतो विशेष्यवशात् स्त्रियां वर्तमानः शब्दः समासे पुंवद्भवति मानिशब्दे स्त्रीलिङ्गैकार्थ्ये विशेष्ये च परे । नोदन्तः । पुंवत्त्वादाडभावः ॥

**न्यग्गोण्यतोऽनंशीयोबहुव्रीहेर्ह्रस्वः** ॥ १९ ॥ न्यङ्ङप्रधानं यो गो-शब्दः यश्च ण्यत् स्त्रीप्रत्ययस्तदन्तस्य समासस्य ह्रस्वो भवति नांशिसमासस्य ईयसन्तस्य च बहुव्रीहेः । आसन्नः । चित्रगुर्देवदत्तः । रूपवती भार्याऽस्येति विगृह्य । प्राग्वत्समासादि । पुंवद्भावो ह्रस्वश्च । रूपवद्भार्यः । एवं दिव्य-वाणिः । प्रियनारिरित्यादयः ॥ बह्व्यः प्रेयस्यो यस्येति विगृह्य पूर्ववत्समा-सादि । अनंशीयोबहुव्रीहेरिति निषेधान्न ह्रस्वः ॥

**ईयसः** ॥ २० ॥ ईयसन्तात् कप् न भवति बहुप्रेयसी पुमान् ॥ शोभनो गन्धोऽस्येति विग्रह्य प्राग्वत्समासादि ॥

**सूत्पूतिसुरभेर्गन्धादिद्गुणे** ॥ २१ ॥ स्वादिभ्यः परो यो गन्धशब्दः तदन्ताद्बहुव्रीहेरिद्भवति गुणे वाच्ये । त इत् । एरित्यतो लुक् सुगन्धिः एवमुद्गन्धिः पूतिगन्धिः सुरभिगन्धिः ॥

**वाऽल्पे** ॥ २२ ॥ अल्पेऽर्थे गन्धशब्दान्ताद्बहुव्रीहेरिद्वा । घृतस्य गन्धोऽल्पो यस्मिन्निति घृतगन्धिः घृतगन्धः ओदनः ॥

**वोपमानात्** ॥ २३ ॥ उपमाने गन्धशब्दान्ताद्बहुव्रीहेरिद्वा भवति । पद्मस्येव गन्धो यस्य पद्मगन्धिः पद्मगन्धः ॥ द्वौ पादावस्येति विगृह्य समासः ॥

**सुसङ्ख्याच्चाहस्त्यादेः पादस्य लुक्** ॥ २४ ॥ सोः सङ्ख्यावाचिनः उपमानाच्च परो यः पादशब्दः तदन्तस्य बहुव्रीहेर्लुग्भवति न हस्त्यादेः । द्विपाद् एवं सुपाद्चतुःपाद्व्याघ्रपादादयः न हस्त्यादेरिति किं हस्तिपादः । प्रिया जायाऽस्येति विगृह्य समासादि ॥

**जायाया जानिः** ॥ २५ ॥ बहुव्रीहेरन्तस्य जायाशब्दस्य जानिर्भवति । प्रियजानिः ॥

**वाऽन्यार्थे** ॥ २६ ॥ अन्यार्थे बहुव्रीहौ सहस्य सो वा भवति उत्तरपदे परे । सह जायया वर्तत इति सजानिः सहजानिरित्यादयः ॥

**वोर्ध्वात्** ॥ २७ ॥ ऊर्ध्वशब्दाज्जानोर्बहुव्रीहौ ज्ञुज्ञौ वा भवतः । ऊर्ध्वे जानुनी अस्य ऊर्ध्वज्ञुः ऊर्ध्वज्ञः ऊर्ध्वजानुः ॥ घट इव ऊधोऽस्या इति विगृह्य समासादि ॥

**स्त्रियामूधसोऽनङ्** ॥ २८ ॥ बहुव्रीहेरन्तस्योधसः स्त्रियामनङ् भवति ।

अङ्गावितो ङित्वादन्त्यादेशः ऊध्न इति ङी श्नः घटोध्नी गौः एवं पीवरो-ध्न्यादयः ॥

**इनः कच्** ॥ २९ ॥ इनन्ताद् बहुव्रीहेः कच् भवति । च इत् न कचीति विशेषणार्थः बहवः करिणोऽस्मिन् बहुकरिको देशः ॥

**उरःप्रभृत्यृन्नित्यात्** ॥ ३० ॥ उरस् इत्याद्यन्तात् ऋदन्तात् नित्या-न्ताच्च बहुव्रीहेः कच् भवति । व्यूढमुरोऽस्य व्यूढोरस्कः बहुसर्पिष्कः एक-पितृकः बह्वी लक्ष्मीरस्येति विगृह्य समासे कचि ॥

**न कचि** ॥ ३१ ॥ अण्व्योः कचि ह्रस्वो न भवति । बहुलक्ष्मीकः बहु-कुमारीकः बहुकर्कन्धूकः ॥

**नञोऽर्थात्** ॥ ३२ ॥ नञोऽर्थान्ताद्बहुव्रीहेः कच् भवति । अनर्थकः स्त्रियामाडि ॥

**त्यायदाद्यतः** ॥ ३३ ॥ त्यप्रत्ययस्यायदादेश्चातः इद्भवति आट्परे प्रत्य-यावयवे के परे अनिति । अनर्थिका ॥ गुणवती भार्याऽस्येति विगृह्य समासादि ॥

**शेषात्सिद्धनन्दिनः** ॥ ३४ ॥ यस्य समासान्तो न विहितः तस्मात् बहुव्रीहेः कच् वा भवति ॥

**वाङः** ॥ ३५ ॥ आङन्तस्य ह्रस्वो वा भवति कचि परे । पक्षे ह्रस्वः गुण-वद्भार्यिकः गुणवद्भार्यकः गुणवद्भार्यः ॥

अव्ययीभावोऽपि त्रेधा ॥ अन्यपदार्थप्रधानः पूर्वपदार्थप्रधानः उत्तरपदा-र्थप्रधानश्चेति । तत्रान्यपदार्थप्रधानो यथा । केश केश दण्ड दण्ड इति स्थिते सर्वेभ्यो जस् । केशाश्च केशाश्च परस्परस्य ग्रहणं यस्मिन् युद्धे दण्डाश्च दण्डाश्च परस्परस्य प्रहरणं यस्मिन् युद्धे इति विगृह्य ॥

**मिथो ग्रहणे प्रहरणे च सरूपं युद्धेऽव्ययीभावः** ॥ ३६ ॥ अन्योऽन्यस्य ग्रहणे प्रहरणे च वर्तमानं सरूपं सुबन्तं तादृशा सुबन्तेन सह समस्यते अन्यपदार्थे युद्धे वाच्ये स च समासोऽव्ययीभावः । सुपः श्लुगादि ॥

**इज्युद्धे** ॥ ३७ ॥ युद्धे विहितात्समासादिच् प्रत्ययो भवति । च इत् ॥

**आदिजन्ते** ॥ ३८ ॥ इजन्ते उत्तरपदे पूर्वपदस्याद् भवति । केशाकेशि दण्डादण्डि एवं मुष्टामुष्टिखड्गाखड्गिप्रभृतयः । बहुलाधिकारात् कचिदाकारो न भवति । अस्यसि ॥ पूर्वपदार्थप्रधानो यथा । गङ्गाशब्दात् ङस् पारशब्दात्सुः गङ्गायाः पारमिति विगृह्य ॥

**पारे मध्येऽन्तः षष्ठ्या** ॥ ३९ ॥ पारे मध्ये अन्तर् इत्येतानि सुबन्तानि षष्ठ्यन्तेन सह समस्यन्ते पूर्वपदार्थे वाच्ये । शेषं प्राग्वत् । निपातनादेत्वं । ह्रस्वादि पारेगङ्गम् एवं समुद्रस्य मध्यं मध्येसमुद्रं वधूनामन्तः अन्तर्वधु ॥ यावदमत्र इति स्थिते उभाभ्यां जस् यावन्त्यमत्राणीति विगृह्य ॥

**यावदवधारणे** ॥ ४० ॥ यावदित्येतत्सुबन्तं सुबन्तेन सह समस्यते अवधारणे सङ्ख्यानियमे द्योत्ये । यावदमत्रं भोजयातिथीन् ॥ आङः सुः संसारइत्यतो ङसिः आ संसारादिति विगृह्य ॥

**बहिष्पर्यपाङ्च्** ॥ ४१ ॥ बहिरादिसुबन्तं सुबन्तेन सह समस्यते । शेषं प्राग्वत् आसंसारं बहिर्ग्रामात् बहिर्ग्रामं परि ग्रामात् परिग्रामम् अप ग्रामात् अपग्रामं प्राग्ग्रामात् प्राग्ग्रामम् ॥ अभि सु मित्र अम् इति स्थिते मित्रमभिमुखमिति विगृह्य ॥

**लक्षणेनाभिप्रत्याभिमुख्ये** ॥ ४२ ॥ अभि प्रति इत्येते सुबन्ते लक्षणवाचिना सुबन्तेन सह समस्येते आभिमुख्ये द्योत्ये । अभिमित्रं गच्छति एवं प्रत्यग्नि पतन्ति शलभाः ॥ अनु सु विदेह शस् इति स्थिते अनु विदेहान् आयते इति विगृह्य ॥

**दैर्घ्येऽनुः** ॥ ४३ ॥ अन्विति सुबन्तं लक्षणवाचिना सुबन्तेन सह समस्यते दैर्घ्ये गम्यमाने। अनुविदेहं सीता सीतोदा च ॥ अनु सु मेरु ङस् इति स्थिते मेरोः समीप इति विगृह्य ॥

**समीपे** ॥ ४४ ॥ समीपे वर्तमानम् अन्वित्येतत् सुबन्तं समीपवाचिना सुबन्तेन सह समस्यते अनुमेरु कुरवः । इति अकलङ्क सह क्षत्र सु मद्र दुस् यवन निस् जन नि वात अति कम्बल अधि स्त्री अनु रथ सह चक्र अनु रूप प्रति अर्थ अनु ज्येष्ठ सह शील सह तृण उप कुम्भ सह षड्जीवनिकाय इति स्थिते एतेभ्यो यथायोगं स्वादयः अकलङ्कस्य शब्दप्रथा क्षत्रस्य सम्पत् मद्राणां समृद्धिः यवनानाम् ऋद्ध्यभावः जनानामभावः वातस्य अत्ययः कम्बल-स्यायमकालः स्त्रीषु अधिकृत्य रथस्य पश्चात् चक्रेण सह रूपस्य योग्यम् अर्थ-मर्थं प्रति ज्येष्ठानामनतिवृत्त्या शीलस्य सदृशं सकलं तृणं कुम्भस्य समीपं । षड्जीवनिकायस्यान्तं कृत्वा इति विगृह्य ॥

**शब्दप्रथासम्पत्समृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिसुप्पश्चाद्युगपद्यथासदृक्साकल्यान्तेऽव्ययं** ॥ ४५ ॥ शब्दप्रथादिष्वर्थेषु वर्तमानमव्ययं सुबन्तं सुबन्तेन सह समस्यते स च समासोऽव्ययीभावः। शेषं प्राग्वत् शब्दस्य प्रथा नामाख्यातिः तत्र इत्यकलङ्कं सम्पदन्यूनत्वं तत्र ॥

**सहस्याकालेऽव्ययीभावे** ॥ ४६ ॥ अव्ययीभावे सहशब्दस्य सो भवति न काले गम्यमाने । सक्षत्रम् ऋद्धेराधिक्यं समृद्धिः तत्र सुमद्रम् ऋद्धेरभावो व्यृद्धिः तत्र दुर्यवनम् अर्थस्यासत्त्वम् अर्थाभावः तत्र निर्जनम् अत्ययोऽतिक्रमः तत्र निवातं भोगादेरवर्तमानत्वमसम्प्रति तत्रातिकम्बलं कर्मादयः सुबर्थाः तत्रा-धिस्त्रि ह्रस्वादि पश्चात्पृष्ठं तत्रानुरथं सहभावो यौगपद्यं तत्र सहस्य सः सचक्रं योग्यता वीप्सा पदार्थानतिवृत्तिः यथार्थाः तत्र क्रमेण अनुरूपं प्रत्यर्थम् अनुज्येष्ठं सादृश्ये सदृक् सशीलं सहस्य सः साकल्यमनवयवः तत्र सतृणं

सहस्य सभावः अन्तः समीपमवसानं च तत्र उपकुम्भं सषड्जीवनिकायं सहस्य सः ॥

**जराया ङश्च** ॥ ४७ ॥ जराशब्दान्तादव्ययीभावादद्भवति ङसादेशश्च । ङ इत् । जरायास्समीपमुपजरसम् इत्यादि ॥

**अनः** ॥ ४८ ॥ अन्नन्तादव्ययीभावादद्भवति । नोऽपदस्येत्यन्त्याजादिलुक् । आत्मन्यधिकृत्य वर्तमानम् अध्यात्म् एवमुपराजमित्यादि ॥

**नपुंसकाद्वा** ॥ ४९ ॥ नपुंसकलिङ्गादन्नन्तादव्ययीभावादद्वा भवति । कर्म प्रति नियतं प्रतिकर्मं प्रतिकर्म ॥

**गिरिनदीपौर्णमास्याग्रहायणीजयः** ॥ ५० ॥ गिर्याद्यन्ताज्जयन्ताच्चाव्ययीभावादद्वा भवति । गिरेस्समीपमुपगिरम् उपगिरि एवमुपनदम् उपनदि एवमुपपौर्ण्णमासम् उपपौर्ण्णमासि उपाग्रहायणम् उपाग्रहायणि उपभिषजम् उपभिषक् उपमरुतम् उपमरुत् ॥

**सरजसोपशुनानुगवम्** ॥ ५१ ॥ एते अव्ययीभावे अदन्ता निपात्यन्ते । रजसा सह रजसं शुनः समीपमुपशुनं गवामनुयानम् अनुगवं सरजसशब्दः समासान्तरेऽपि ॥ यथा सु काल अम् इति स्थिते । कालमनतिक्रम्य इति विगृह्य ॥

**यथाथा** ॥ ५२ ॥ अथाप्रत्ययान्तं यथेत्यव्ययं सुबन्तेन सह समस्यते । यथाकालम् अथा इति किं यथा चैत्रस्तथा मैत्रः ॥

उत्तरपदार्थप्रधानो यथा ॥ सूप सु प्रति सु इति स्थिते अल्पः सूपः इति विगृह्य ॥

**नित्यं प्रतिनाल्पे** ॥ ५३ ॥ अल्पार्थे वर्तमानेन प्रतिना सह सुबन्तं नित्यं समस्यते स च समासोऽव्ययीभावः । शेषं प्राग्वत् सूपप्रति एवं दधिप्रतिघृतप्रत्यादयः ॥

तत्पुरुषसमासो द्वेधा । पूर्वपदार्थप्रधान उत्तरपदार्थप्रधानश्चेति । तत्र पूर्वपदार्थप्रधानो यथा । नञ् सु अश्व सु इति स्थिते नाश्व इति विगृह्य ॥

**नञ्** ॥ ९४ ॥ नञ् सुपा समस्यते स च समासो बहुव्रीह्यादिलक्षणरहितस्तत्पुरुषः । शेषं प्राग्वत् । ञ इत् । हल्यनञ्समासे लुक्तः सादित्यादि विशेषणार्थः ॥

**नञोऽश्** ॥ ९५ ॥ नञोऽश् भवति समासे सुबन्ते परे । शित्त्वात्सर्वस्य ॥

**अशोऽचि नट्** ॥ ९६ ॥ नञादेशादशः परस्याचो नट् भवति । अटावितो टित्त्वादादौ पुनः स्वादिः अनश्वः एवमनेकः इत्यादि ॥ पूर्व सु काय ङस् इति स्थिते पूर्वः कायस्येति विगृह्य ॥

**पूर्वापराधरोत्तरमंशिनाऽभिन्नेन** ॥ ९७ ॥ पूर्वाद्यंशवाचि सुबन्तं अभिन्नावयविना अंशिवाचिना सुबन्तेन सह समस्यते स समासस्तत्पुरुषः । पूर्वकायः एवमपरकायः अधरकायः उत्तरकायः ॥ अर्ध सु देश ङस् इति स्थिते अर्ध देशस्येति विगृह्य ॥

**समेऽर्धं** ॥ ९८ ॥ समेंऽशे वर्तमानोऽर्धशब्दः अंशिवाचिना सुपा समस्यते स च तत्पुरुषः । अर्धदेशः समे इति किं देशार्धः ॥

उत्तरपदार्थप्रधानो यथा ॥ दुस् जन इति स्थिते द्वाभ्यां सुः निन्दितो जन इति विगृह्य ॥

**तिदुस्स्वत्याङ्कान्यस्तत्पुरुषः** ॥ ९९ ॥ तिसंज्ञं दुस् सु अति आङ् कु इत्येतानि चाव्ययानि सुबन्तानि सुपा समस्यन्ते स च समासो बहुव्रीह्यादिलक्षणरहितस्तत्पुरुषः । शेषं प्राग्वत् दुर्जनः एवं शोभनो जनः सुजनः अतिशयितं महत् अतिमहत् ईषदुष्णम् ओष्णं कुत्सितो मार्गः कुमार्गः ॥ दुस् राजन् इति स्थिते । पूर्ववत्समासादि ॥

**राजन्सखेः** ॥ ६० ॥ राजन्सखिशब्दान्तात्तत्पुरुषसमासादट् भवति । ट इत् ङ्यर्थः ॥

**सब्रह्मचारिपीठसर्पिकलापिकुधुमितैतलिजाजलिलाङ्गलिशिलालिशिखण्डिमूकरसद्मसुपर्वणोऽपदस्य** ॥ ६१ ॥ सब्रह्मचारिन्नित्यादेर्नान्तस्य चापदस्य अन्त्याजादेर्लुग्भवति तद्धिते परे। सस्य रित्वादि दूराजः। दुस्सखील्यतोऽटि एरिति लुक् दुस्सखः ॥ सुराजन् अतिराजन् इति अतोऽटि प्राप्ते ॥

**प्राक्टात्स्वतेःपूजायां** ॥ ६२ ॥ प्रशस्तवाचिस्वतिपूर्वात्समासाद्बहुव्रीहेः काष्टे ट इति टात्प्राग्यो विहितः प्रत्ययः स न भवति। सुराजा अतिराजा ॥ न राजा इति विगृह्य समासे ॥

**न नञः** ॥ ६३ ॥ नञ् समासाद्यथोक्तः समासान्तो न भवति। अराजा एवमसखा इत्यादि ॥ कु आगम इति स्थिते प्राग्वत् समासादि ॥

**कोः कदचि** ॥ ६४ ॥ अव्ययस्य कोः कद् भवति अजादावुत्तरपदे परे समासे। कदागमः कदर्थः इत्यादि ॥ कु पुरुष इति स्थिते समासादि ॥

**पुरुषे का वा** ॥ ६५ ॥ कोः का वा भवति पुरुषशब्दे परे समासे। कापुरुषः कुपुरुषः ॥ कु पथिन् इति स्थिते समासादि ॥

**ऋक्पूःपथ्यपोऽत्** ॥ ६६ ॥ ऋक् पुर् पथिन् अप् इत्येतदन्तात्समासात् अद् भवति। त इत् अन्त्याजादिलुक् ॥

**पथ्यक्षयोः** ॥ ६७ ॥ कोः का भवति पथ्यक्षयोः परतस्समासे। कापथः एवं काक्षः ॥ कु उष्णः इति स्थिते ॥

**काकवौ वोष्णे** ॥ ६८ ॥ कोः काकवौ वा भवतः उष्णशब्दे परे समासे। कोष्णं कवोष्णं। पक्षे कदुष्णं ॥ प्र आचार्य इति स्थिते द्वाभ्यां सुः प्रगत आचार्य इति विगृह्य ॥

**गतादिषु प्रादयः** ॥ ६९ ॥ गताद्यर्थे वर्तमानं प्रादि सुवन्तं सुवन्तेन सह समस्यते स च समासस्तत्पुरुषः। प्राचार्यः। एवं संगतोऽर्थः समर्थः।

अतिक्रान्तो मार्गमतिमार्गः । उद्गतो वेलामुद्वेलः । निष्क्रान्तो मलान्निर्मलः अपगतोऽर्थादपार्थः ॥ अध्वानमुपगत इति विगृह्य समासे ॥

**उपसर्गादध्वनः** ॥ ७० ॥ उपसर्गात्परो योऽध्वन्शब्दः तदन्तात्समासादद्भवति । उपाध्वो रथः । व्यध्वो दुरध्व इत्यादि ॥

**प्रत्यन्ववात्सामलोम्नः** ॥ ७१ ॥ प्रत्यन्ववपूर्वात् सामन्नन्ताल्लोमन्नन्ताच्च समासादद् भवति । प्रतिगतं साम प्रतिसामम् अनुगतं साम अनुसामम् अवभ्रष्टं साम अवसामम् एवं प्रतिलोमम् अनुलोमम् अवलोमम् ॥ प्रति उरस् इति स्थिते प्रतिष्ठितमुरसीति विगृह्य समासे ॥

**प्रतेरुरसः सप्तम्याः** ॥ ७२ ॥ प्रतिपूर्वात् सप्तम्यन्तात् उरसः अद्भवति समासे । प्रत्युरसं ॥ ग्राम अम् नी सु इति स्थिते ग्रामं नयतीति विगृह्य ॥

**स्वकृताद्युक्तम्** ॥ ७३ ॥ अस्युक्तं सुबन्तं स्वकृदन्तेन सुपा समस्यते ॥

**ग्रामाग्राण्णीः** ॥ ७४ ॥ ग्राम अग्र इत्येताभ्यां परस्य नियो नस्य णो भवति । ग्रामणीः एवमग्रणीः कुम्भकारादयः ॥ स्वयं सु कृत सु इति स्थिते स्वयं कृतमिति विगृह्य ॥

**स्वयंसामि क्तेन** ॥ ७५ ॥ स्वयं सामि इत्येते अव्यये क्तान्तेन सुपा समस्येते स्वयंकृतं सामिपक्वं ॥ मुहूर्त्त अम् सुख सु इति स्थिते मुहूर्त्तं सुखमिति विगृह्य ॥

**व्याप्तौ** ॥ ७६ ॥ व्याप्तौ द्वितीयान्तं कालवाचि सुबन्तं व्यापकेन सुपा समस्यते । मुहूर्त्तसुखम् एवं क्षणस्थायि वर्षभोग्यः ॥ धर्म अम् श्रित सु इति स्थिते धर्मं श्रित इति विगृह्य ॥

**श्रितादिभिः** ॥ ७७ ॥ द्वितीयान्तं सुबन्तं श्रितादिभिस्सुबन्तैः समस्यते । धर्मश्रितः एवं दुःखमतीतो दुःखातीतः ओदनं बुभुक्षुः ओदनबुभुक्षुः ॥ ईषदुष्णमिति विगृह्य ॥

**ईषद्गुणवचनैः** ॥ ७८ ॥ ईषदित्यव्ययं गुणवाचिभिस्सुबन्तैस्समस्यते । ईषदुष्णम् एवमीषन्मधुरम् ईषद्ज्ञानं ॥ मद टा विह्वल सु इति स्थिते मदेन विह्वल इति विगृह्य ॥

**तृतीया तत्कृतैः** ॥ ७९ ॥ तृतीयान्तं तत्कृतेन गुणवाचिना सुबन्तेन सह समस्यते । मदविह्वलः एवं नखच्छेदः इत्यादि ॥ स्वेन कृतमिति विगृह्य ॥

**साधनं कृता** ॥ ८० ॥ साधनवाचि सुबन्तं कृदन्तेन सुपा समस्यते । स्वकृतम् एवं परकृतं नखनिर्भिन्नमित्यादि ॥ रथ ङे दारु सु पितृ ङे अर्थ सु भूत भ्यस् बलि सु इति स्थिते रथाय दारु पित्रे इदं भूतेभ्यो बलिरिति विगृह्य ॥

**चतुर्थी प्रकृतिस्वार्थार्थादिभिः** ॥ ८१ ॥ चतुर्थ्यन्तं सुबन्तं प्रकृतिवाचिना चतुर्थ्यर्थवाचिना अर्थशब्देनार्थादिभिश्च सुबन्तैः समस्यते । रथदारु पित्रर्थं भूतबलिः ॥ अलं सु कुमारि ङे इति स्थिते अलं कुमार्यै इति विगृह्य ॥

**नयाऽलं** ॥ ८२ ॥ अलमित्यव्ययं चतुर्थ्यन्तेन समस्यते । न्यग्गोष्यत इति ह्रस्वः अलंकुमारिर्मित्रः । अलं पुरुषायेति विगृह्य समासे ॥

**खोऽषडक्षाशितंग्वलंकर्मालंपुरुषात्** ॥ ८३ ॥ अषडक्षादिभ्यः ख-प्रत्ययो भवति ॥

**छघढखफप्रत्ययस्येयियेयीनायन्** ॥ ८४ ॥ तद्धितप्रत्ययस्य छ ईय् भवति घ इय् ढ एय् ख ईन् फ आयन् । शेषं प्राग्वत् । अलंपुरुषीणा कन्या एवमलंकर्मीणः न षडक्षीण्यस्येति बहुव्रीहेः खः अषडक्षीणः मन्त्रादिः आशिता गावोऽस्मिन्नित्याशितंगवीनम् अरण्यं निपातनान्नम् ॥ चोराद्भयमिति विगृह्य ॥

**पञ्चमी भयादिभिः** ॥ ८५ ॥ पञ्चम्यन्तं भयादिभिस्सुबन्तैः समस्यते। चोरभयं ग्रामागत इत्यादि ॥ राज्ञः पुरुष इति विगृह्य ॥

**षष्ठ्ययत्नात्** ॥ ८६ ॥ षष्ठ्यन्तं सुपा समस्यते न यत्नात्। न विनिमेय-द्यूतपणमित्यादेर्विहितषष्ठ्यन्तं।राजपुरुषः नलुक् जीवगुणाः मोक्षमार्ग इत्यादि। अयत्नादिति किं धर्मस्य ज्ञाता ॥ देवानां याजकः साधूनां पूजक इति विगृह्य ॥

**याजकादिभिः** ॥ ८७ ॥ षष्ठ्यन्तं याजकादिभिः सुबन्तैः समस्यते । बाधकबाधनार्थं वचनं देवयाजकः साधुपूजकः एवं भूभर्तेत्यादि ॥ भवतः आसिकेति विगृह्य समासे प्राप्ते ॥

**न कर्तरि** ॥ ८८ ॥ कर्तरि षष्ठ्यन्तं वुप्रत्ययान्तेन सुपा न समस्यते ॥ ओदनस्य भोजकः ॥ अपां स्रष्टा इति विगृह्य समासे प्राप्ते ॥

**कर्मणि वा च** ॥ ८९ ॥ कर्मणि षष्ठ्यन्तं कर्तरि वुप्रत्ययान्तेन तृप्रत्यया-न्तेन च सुपा न समस्यते ॥

**तृप्तार्थाव्ययनिर्धार्यडच्छ्रानशमतिपूजाधारक्तैः** ॥ ९० ॥ तृप्तार्थै-रव्ययैर्निर्धार्यवाचिभिर्डदन्तैः शत्रन्तैरानशन्तैर्मतिपूजार्थाधारक्तान्तैश्च षष्ठ्यन्तं न समस्यते । फलानां तृप्तः सक्तूनां पूर्णः देवदत्तस्य कृत्वा देवदत्तस्य पुरस्तात् गवां कृष्णा सम्पन्नक्षीरतमा सम्राजां पञ्चमः शान्तिः देवदत्तस्य पचन् पचमानः सतां मतः सतां पूजितः इदमहेः सृप्तं ॥ मोक्षस्य पन्था इति विगृह्य समासे अत्वं मोक्षपथः । ऋचोऽर्धमिति विगृह्य ॥

**समेऽर्धं** ॥ ९१ ॥ समभागे वर्तमानमर्धमिति सुबन्तं षष्ठ्यन्तेन समस्यते । (इत्युक्तेन समासे ।) अत्वादि । अर्धर्चं देवपुरम् इत्यादि ॥ राज्यस्य धूरिति विगृह्य समासे ॥

**धुरोऽनक्षस्य** ॥ ९२ ॥ धुरन्तात्समासादद् भवति नाक्षस्य । राज्यधुरा अनक्षस्येति किम् अक्षधूः ॥ ब्रह्मणो वर्च इति विगृह्य समासे ॥

**ब्रह्महस्तिराजपल्याद्वर्चसः** ॥ ९३ ॥ ब्रह्मादेः पराद्वर्चसः समासादद् भवति। ब्रह्मवर्चसम् एवं राजवर्चसम् इत्यादि ॥ आप्तस्य गौरिति विगृह्य समासे ॥

**गोस्तत्पुरुषात्** ॥ ९४ ॥ गोशब्दान्तात्तत्पुरुषसमासादड् भवति। ट इत् स्त्रियां ङ्यर्थः अव् टित्वात् ङी आप्तगवी एवं सुरगवीकामगवीप्रभृतयः ॥ जिनानां राजेति विगृह्य समासे राजन्सखेरित्यट् जिनराजः सुरराजः नरराजादयः। स्त्रियाम् अतिराजी। एवमग्नेस्सखा अग्निसखः इत्यादयः ॥ अह्नः पूर्वमिति विगृह्य पूर्वापरेति समासे ॥

**सङ्ख्याव्ययसर्वांशात्** ॥ ९५ ॥ सङ्ख्याशब्दादव्ययात्सर्वशब्दादंशवाचिनश्च परो योऽहन्शब्दः तदन्तात्तत्पुरुषसमासादट् भवति अहन्शब्दस्य चाह्न इत्ययमादेशो भवति। अतोऽह्न इति क्रमसूत्रात् णत्वं पूर्वाह्णः एवमपराह्णः मध्याह्नः सायाह्नः इत्यादयः ॥ वर्षाणां रात्रिरिति विगृह्य समासे ॥

**पुण्यवर्षादीर्घसङ्ख्यातैकाच्चाद्रात्रेः** ॥ ९६ ॥ पुण्यादेस्सङ्ख्यादेश्च परो यो रात्रिशब्दस्तदन्तात्तत्पुरुषसमासादद् भवति। वर्षारात्रः एवं पूर्वरात्रः मद्ध्यरात्रः अर्धरात्रः अपररात्र इत्यादि ॥ पुरुषस्यायुरिति विगृह्य समासे ॥

**स्वश्रेयसश्वोवसीयसनिश्रेयसपुरुषायुषगोष्टश्वद्विस्तावत्रिस्तावाः॥** ॥ ९७ ॥ एते अदन्ता निपात्यन्ते। पुरुषायुषं ॥

**नावः** ॥ ९८ ॥ अर्धपूर्वान्नावन्तात् समासादड् भवति। नावोऽर्द्धम् अर्द्धनावं स्त्रियाम् अर्धनावी ॥ अक्षेषु शौण्ड इति विगृह्य ॥

**सप्तमी शौण्डादिभिः** ॥ ९९ ॥ सप्तम्यन्तं शौण्डादिभिः सुबन्तैस्समस्यते। अक्षशौण्डः एवं रणवीरः कलाकुशलः वादनिपुणः इत्यादयः ॥

**पात्रेसमितादयः** ॥ १०० ॥ पात्रेसमित इत्यादयः शब्दाः तत्पुरुषसमासे निपात्यन्ते आक्षेपे गम्यमाने। पात्रेसमितः कूपकच्छपः कूपमण्डूकः

मातरिपुरुषः पिण्डीशूरः गेहेनर्ती गोष्ठेशूरः कर्णेजपः इत्यादयः गोष्ठे श्वा गोष्ठश्वः स्वश्रेयसेति निपातनाददन्तत्वं ॥

कर्मधारयो द्विविधः ॥ उत्तरपदार्थप्रधानः पूर्वपदार्थप्रधानश्चेति तत्र उत्तर-पदार्थप्रधानो यथा । नील सु उत्पल सु इति स्थिते नीलं च तत् उत्पलं च तदिति विगृह्य ॥

**विशेषणं व्यभिचार्येकार्थं कर्मधारयश्च** ॥ १०१ ॥ व्यभिचारि वि-शेषणं समानाधिकरणं सुबन्तं विशेष्येण सुपा समस्यते स च समासः तत्पुरुष-संज्ञः कर्मधारयसंज्ञश्च । शेषं प्राग्वत् नीलोत्पलम् एवं सम्यग्दर्शनं सम्यग्ज्ञानं सम्यक्चारित्रं सद्धर्म इत्यादयः । व्यभिचारीति किं तक्षकः सर्पः एकार्थ इति किं जातस्योक्षा ॥ अन्धं च तत् तमश्च तत् इति विगृह्य समासे ॥

**समवान्धात्तमसः** ॥ १०२ ॥ सम् अव अन्ध इत्येतेभ्यः परो यस्तमश्शब्दः तदन्तात्समासादद् भवति । अन्धतमसम् एवं सन्ततं तमः सन्तमसम् अवभ्रष्टं तमः अवतमसं ॥ जातश्चासावुक्षा चेति विगृह्य समासे ॥

**जातमहद्वृद्धादुक्ष्णः कर्मधारयात्** ॥ १०३ ॥ जातादिभ्यः परो यः उक्षन्शब्दः तदन्तात् कर्मधारयसमासादद्भवति । जातोक्षः । एवं महोक्षः वृद्धोक्षः ॥ पुमांश्चासौ गौश्च पुंगवः । अट् ॥

**अह्नः** ॥ १०४ ॥ अहन्शब्दान्तात्तत्पुरुषसमासादड् भवति । परमं च तत् अहश्च परमाहः एवं सुदिनाहं पुण्याहं प्रथमाहः प्राह्णः सर्वाह्णः मध्याह्नः सायाह्नः । सङ्ख्याव्ययेत्यादिना अह्नादेशः ॥ पुण्या चासौ रात्रिश्चेति पुण्यरात्रः एवं दीर्घरात्रः सङ्ख्यातरात्रः सर्वरात्रः एकरात्रः मध्यरात्रः । पुण्यवर्षेत्यादिना अत् ॥ पूर्वपदार्थप्रधानो यथा ॥ भीरुश्चासौ क्षत्रियश्चेति विगृह्य ॥

**निन्द्योऽपापाणकेन** ॥ १०५ ॥ निन्द्यवाचि सुबन्तं निन्दावाचिना सुपा

समस्यते न पापाणकाभ्यां स च समासस्तत्पुरुषः कर्मधारयश्च । क्षत्रियभीरुः तार्किकवठरः भिक्षुविटः । अपापाणकेनेति किं पापकुलालः अणकनापितः ॥ शस्त्रीव श्यामेति विगृह्य ॥

**गौणस्तेन** ॥ १०६ ॥ गौणार्थवाचि सुबन्तं गुणवाचिना सुबन्तेन समस्यते स च तत्पुरुषः । शस्त्रीश्यामा सा । एवं कुमुदश्यामादयः ॥ सिंह इव पुरुष इति विगृह्य ॥

**व्याघ्रादिभिर्गौणैस्तदनुक्तौ** ॥१०७॥ उपमेयवाचि सुबन्तं गौणैर्व्याघ्रादिभिस्सुबन्तैः समस्यते तस्य गुणस्यानुक्तौ सत्यां स च समासस्तत्पुरुषः कर्मधारयसंज्ञश्च । पुरुषसिंहः भव्यपुण्डरीकः मुखपद्मं पाणिपल्लव इत्यादि ॥ मुनिर्वृन्दारक इव पूज्यः इति विगृह्य ॥

**वृन्दारकनागकुञ्जरैः** ॥ १०८ ॥ समानाधिकरणं सुबन्तं वृन्दारकादिभिः पूजावाचिसुबन्तैः समस्यते स च तत्पुरुषः कर्मधारयसंज्ञश्च । मुनिवृन्दारकः । एवं जिननागः । नृपकुञ्जरः ॥ को राजेति विगृह्य॥

**किं क्षेपे** ॥ १०९ ॥ किमित्येतत्सुबन्तं समानाधिकरणेन सुबन्तेन समस्यते क्षेपे निन्दायां स च समासस्तत्पुरुषः कर्मधारयसंज्ञश्च । राजन्सखेरित्यटि प्राप्ते ॥

**किमः क्षेपे** ॥ ११० ॥ किमः पराद्विहितः समासान्तो न भवति क्षेपे निन्दायां । किंराजा नीतिवर्जितः । किंसखा शाठ्यवान् भुवि । किंगौरवाहक इत्यादि ॥ युवतिश्चासौ ब्राह्मणी चेति विगृह्य ॥

**पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्वष्कयणीप्रवक्तृश्रोत्रियाध्यायकधूर्तप्रशंसारूढैर्जातिः** ॥ १११ ॥ एकार्थं जातिवाचि सुबन्तं पोटादिभिः प्रशंसारूढैश्च सुबन्तैस्समस्यते स च समासस्तत्पुरुषः कर्मधारयश्च ।

मानोति पुंवद्भावः ब्राह्मणयुवतिः स्तोकं गुणो गुणस्तोकं मुनिप्रवक्ता क्षत्रियधूर्तः गोमतल्लिका गोमचर्चिका गोप्रकाण्डमित्यादि ॥ कुमारश्चासौ श्रमणश्चेति विगृह्य ॥

**कुमारः श्रमणादिना** ॥ ११२ ॥ कुमारशब्दः श्रमणादिना सुपा समस्यते । कुमारश्रमणः । एवं कुमारतापसः कुमारवज्रजङ्घः कुमारनेमिः कुमारसेनः इत्यादि ॥ श्रिया उपलक्षितो वर्धमान इति विगृह्य ॥

**मयूरव्यंसकादयः** ॥ ११३ ॥ मयूरव्यंसक इत्यादयः शब्दाः कृतसमासा निपात्यन्ते । श्रीवर्धमानः । एवम् उदक् च तत् अवाक् च उच्चावचम् उच्चनीचम् एहिस्वागता अश्नीतपिबता यातायातं शाकभिक्षुः घृतौदनः अश्वरथः सलिलघटः इत्यादि ॥

द्विगुसमासो यथा ॥ पञ्चन् जस् गो जस् धन स् इति स्थिते । पञ्च गावो धनमस्येति विगृह्य । दिगधिकं संज्ञातद्धितोत्तरपदे इत्यधिकृत्य ॥

**सङ्ख्या समाहारे च द्विगुश्चानाम्न्ययं** ॥ ११४ ॥ सङ्ख्यावाचि सुबन्तमेकार्थं सुबन्तेन समस्यते संज्ञायां तद्धितप्रत्यये उत्तरपदे परे समाहारे च गम्यमाने स च तत्पुरुषः कर्मधारयो द्विगुसंज्ञश्च द्विगुर्न नाम्नि । तत्पुरुषत्वाद्गोशब्दादट् । पञ्चगवधनः । अष्टानां सहस्राणां समाहार इति विगृह्य द्विगुसमासः । स्त्रीलिङ्गत्वाद्द्विगोरिति ङी । अष्टसहस्री । एवं त्रिलोकी इत्यादि ॥ पञ्चानां राज्ञां समाहार इति विगृह्य समासे ॥

**द्विगोरन्नह्नोऽट्** ॥ ११५ ॥ अन्नन्तादहन्नन्ताच्च द्विगोरट् भवति । शेषं प्राग्वत् । पञ्चराजी । त्रयाणामह्नां समाहार इति विगृह्य समासे अट् । त्र्यहः । एवं पञ्चाह इत्यादि ॥

**सङ्ख्याव्ययादङ्गुलेः** ॥ ११६ ॥ सङ्ख्यावाचिनोऽव्ययाच्च परो योऽङ्गुलि-

शब्दः तदन्तात्तत्पुरुषाङ्गो भवति । द्वयोरङ्गुल्योस्समाहारः द्व्यङ्गुलम् । एवं त्र्यङ्गुलम् अङ्गुलिमतिक्रान्तमत्यङ्गुलम् इत्यादि ॥

द्वन्द्वसमासो द्विधा ॥ अवयवप्रधानः समाहारप्रधानश्चेति । तत्रावयवप्रधानो यथा । प्लक्षश्च न्यग्रोधश्चेति विगृह्य ॥

**द्वन्द्वस्सहोक्तौ** ॥ ११७ ॥ सुबन्तं सुबन्तेन सह समस्यते द्वयोरर्थयोः सहवचने समाहृतौ स च समासो द्वन्द्वः ॥

**लघुघ्यजाद्यदल्पाजर्च्यमेकं** ॥ ११८ ॥ द्वन्द्वे लघ्वक्षरं घिसंज्ञमजाद्यदन्तमल्पाजर्च्यं च एकं पूर्वं प्रयोज्यं । शेषं प्राग्वत् प्लक्षन्यग्रोधौ । एवं गुणमुख्यौ अग्निधूमौ इन्द्राग्नी अस्त्रशस्त्रे वासुदेवार्जुनौ ॥ ब्राह्मणः क्षत्त्रियश्चेति विगृह्य समासे ॥

**वर्णभ्रात्रनुपूर्वं** ॥ ११९ ॥ वर्णः भ्राता च अनुपूर्वं प्रथमं प्रयोज्यं । ब्राह्मणक्षत्त्रियौ । एवं बलभद्रवासुदेवौ ॥ स च देवदत्तश्चेति विगृह्य समासे ॥

**त्यदादिः** ॥ १२० ॥ त्यदादेः त्यदादिनाऽन्येन वा द्वन्द्वसमासे त्यदादिरेवावशिष्यते । त्यदादीनां मिथो यद्यत् परं तदेवैकं शिष्यते । तौ । एवं स च त्वं चेति विगृह्य । युवां । त्वं चाहं चावां ॥ समाहारप्रधानो यथा । वधूश्च वरश्चेति विगृह्य समासे ॥

**द्वन्द्वो वा** ॥ १२१ ॥ द्वन्द्वसमास एकार्थो वा भवति । एकार्थत्वेन नपुंसकत्वं । वधूवरं वधूवरौ वा । एवं लोकालोकमित्यादि ॥ अश्वाश्च रथाश्चेति विगृह्य समासे ॥

**सेनाङ्गक्षुद्रजन्तु** ॥ १२२ ॥ सेनाङ्गानां क्षुद्रजन्तूनां द्वन्द्व एकार्थो नित्यं भवति । अश्वरथं यूकालिक्षम् अहिनकुलं ॥ बदराणि चामलकानि चेति विगृह्य समासे ॥

**फलं जातिः** ॥ १२३ ॥ फलवाचिनां जातिशब्दानां द्वन्द्व एकार्थो नित्यं

भवति । बदरामलकम् एवमाम्रपनसमित्यादि ॥ पाणी च पादौ चेति विगृह्य समासे ॥

**प्राणितूर्याङ्गं** ॥१२४॥ प्राण्यङ्गानां तूर्याङ्गानां द्वन्द्व एकार्थो नित्यं भवति । पाणिपादं शङ्खपटहम् इत्यादि ॥ स्त्री च पुमांश्चेति विगृह्य समासे ॥

**स्त्रियाः पुंसो द्वन्द्वाच्च** ॥१२५॥ स्त्रीशब्दात् परो यः पुंस्शब्दस्तदन्तात् द्वन्द्वात् कर्मधारयाच्च समासादद्भवति । स्त्रीपुंसं ॥ धेनुश्चानड्वांश्चेति विगृह्य समासे ॥

**धेन्वनडुहर्ग्यजुषाहोरात्रनक्तंदिवरात्रिंदिवाहर्दिवोर्वष्ठीवपदष्ठीवाक्षिभ्रुवदारगवं** ॥ १२६ ॥ धेन्वनडुहादयः शब्दा द्वन्द्वे अदन्ता निपात्यन्ते । धेन्वनडुहम् । एवम् ऋक यजुश्च ऋग्यजुषम् । अहश्च रात्रिश्च अहोरात्रं । नक्तं च दिवा च नक्तंदिवं । रात्रिश्च दिवा च रात्रिंदिवम् । अहश्च दिवा च अहर्दिवम् ऊरूच अष्ठीवन्तौ च ऊर्वष्ठीवं । पादौ च अष्ठीवन्तौ च पदष्ठीवम् । अक्षिणी च भ्रुवौ च अक्षिभ्रुवं । दाराश्च गावश्च दारगवं ॥ दधि च पयश्चेति विगृह्य समासे ॥

**न दधिपयआदिः** ॥ १२७ ॥ दधिपयसित्यादेर्द्वन्द्व एकार्थो न भवति । दधिपयसी वाङ्मनसे पाठाददन्तत्वम् ॥

॥ इति श्लुक्समाससङ्ग्रहः ॥

---

**॥ अथ समासे सुपः श्लुचि प्राप्तायां क्वचिदश्लुग्विधिरुच्यते ॥**

ओजसा कृतमिति विगृह्य समासे । नोत्तरपदे सत्त्व इति अधिकृत्य ॥

**ओजोऽञ्जस्सहोऽम्भस्तपसष्टः** ॥१२८॥ ओजसादिभ्यः परस्य टः

समासे श्लुग् न भवति । ओजसाकृम् अञ्जसाकृतं सहसाकृतम् अम्भसाकृतं तपसाकृतं ॥ परस्मै पदमिति विगृह्य समासे ॥

**ङेर्व्याकरणे** ॥ १२९ ॥ ङे इति सुपः समासे श्लुग् न भवति व्याकरणे विषये । एवमात्मनेपदमित्यादि ॥ कण्ठे कालोऽस्येति विगृह्य समासे ॥

**अकामेऽमूर्धमस्तकात् स्वाङ्गात्** ॥ १३० ॥ मूर्धमस्तकवर्जितात् स्वाङ्गात् परस्याः सप्तम्याः कामवर्जित उत्तरपदे श्लुङ्न भवति। कण्ठेकालः उरसिलोमादयः । अमूर्धमस्तकादिति किं मूर्धशिखः मस्तकशिखः अकाम इति किं मुखकामः ॥ देवानां प्रिय इति विगृह्य समासे ॥

**ब्राह्मणाच्छंसिपुंसानुजजनुषान्धगोषुचरदिवोदासदेवानांप्रियाः** ॥ १३१ ॥ एते अश्लुक्समासा निपात्यन्ते । ब्राह्मणाच्छंसतीति ब्राह्मणाच्छंसी । पुंसा अनुजा पुंसानुजा । जनुषा जन्मना अन्धो जनुषान्धः । गोषु चरतीति गोषुचरः । दिवोदास इति कस्य चिन्नाम । देवानांप्रियः मूर्खः पूज्यो वा ॥

**वाग्दिक्पश्यतो युक्तिदण्डहरे** ॥ १३२ ॥ वाक् दिक् पश्यत् इत्येतेभ्यः परस्याः षष्ठ्याः यथासङ्ख्यं युक्तिदण्डहरेषूत्तरपदेषु श्लुन्न भवति । वाचोयुक्तिः दिशोदण्डः पश्यतोहरः ॥

**गोष्पदं सेवितप्रमाणे** ॥ १३३ ॥ गोभिः सेविते देशे प्रमाणे च सङ्ख्यातेऽर्थे गोष्पदमिति निपात्यते ॥

श्रीमते वर्धमानाय नमो नमितविद्विषे ।
यद्ज्ञानान्तर्गतं भूत्वा त्रैलोक्यं गोष्पदायते ॥

मातुः स्वसेति विगृह्य ॥

**स्वसृपत्योर्वा** ॥ १३४ ॥ ऋकारान्तानां षष्ठ्याः श्लुग्वा भवति स्वसृपतिशब्दयोः परतः समासे ॥

**मातृपितुः स्वसुःषिः** ॥ १३५ ॥ अलुप्तविभक्तिभ्यां मातृपितृशब्दाभ्यां परस्य स्वसृशब्दस्य षिर्वा भवति ॥

**तस्मादादेः** ॥ १३६ ॥ पञ्चम्यन्तात् परस्य षष्ठ्यन्तस्य यो विधिः तस्यादेरलः स्थाने भवतीति आदेः सस्य षिः । श्लुक्पक्षे ॥

**ऋः** ॥ १३७ ॥ ऋकारान्ताभ्यां मातृपितृशब्दाभ्यां परस्य स्वसृशब्दस्य षिर्भवति । मातुष्ष्वसा मातुःस्वसा मातृष्वसा एवं पितुष्ष्वसा पितुःस्वसा पितृष्वसा ॥ माता च पिता चेति द्वन्द्वे ॥

**मातरपितरं द्वन्द्वे वा** ॥ १३८ ॥ मातरपितराविति द्वन्द्वसमासे वा निपात्यते । पक्षे॥

**आङ्** ॥ १३९ ॥ ऋतां द्वन्द्वे पूर्वपदस्याङ् भवति विद्यायोनिसम्बन्धे निमित्ते । ङ इत् । आदेशत्वज्ञापनार्थः मातरपितरौ मातापितरौ एवं मातादुहितरावित्यादि ॥

**पिता मात्रा वा** ॥ १४० ॥ मातृपितृशब्दयोः द्वन्द्वे पितृशब्द एक एव प्रयोज्यो वा । पितरौ मातापितरौ ॥ सूर्यश्च चन्द्रमाश्चेति विगृह्य द्वन्द्वे ॥

**इन्द्रासोमादिषु देवतानाम्** ॥ १४१ ॥ इन्द्रासोमादिषु देवतावाचिषु द्वन्द्वे पूर्वस्याकारो निपात्यते । सूर्याचन्द्रमसौ एवमिन्द्रासोमावित्यादि ॥ गन्तुं मनोऽस्येति विगृह्य बहुव्रीहौ ॥

**तुमो मनस्कामे** ॥ १४२ ॥ तुमोऽन्तस्य लुग् भवति मनस्कामयोः परतः समासे । गन्तुमनाः गन्तुकामः ॥ इषीकायास्तूलमिति विगृह्य समासे ॥

**मालेषीकेष्टकस्यान्तस्य च भारितूलचिते** ॥ १४३ ॥ मालादीनां तदन्तानां च ह्रस्वो भवति यथासङ्ख्यं भार्यादिषु परतः समासे । इषीकतूलम् एवं मालभारि इष्टकचितं ॥ भ्रुवः कुटिरिति विगृह्य समासे ॥

**भ्रुवोऽच्च कुटिकुंसे** ॥ १४४ ॥ भ्रूशब्दस्य ह्रस्वोऽच्च भवतः कुटिकुंसयोः परतः समासे । भ्रुकुटिः भ्रकुटिः भ्रुकुंसः भ्रकुंसः ॥ एकोत्तरा दशेति विगृह्य ॥

**एकादश षोडश षोडन् षोढा षद्धा** ॥ १४५ ॥ एकादशादयः समासे कृतात्वादयो निपात्यन्ते । एकादश एवं षड्भिरधिका दश षोडश षड् दन्ता अस्येति षोडन् ॥ द्वाभ्यामधिका दशेति विगृह्य समासे ॥

**द्वाष्टात्रयोऽनशीतौ प्राक्शतादबहुव्रीहौ** ॥ १४६ ॥ शतात् प्राक् सङ्ख्यावाचिन्युत्तरपदे द्वि अष्टन् त्रि इत्येतेषां यथासङ्ख्यं द्वा अष्टा त्रयस् इत्येते आदेशा भवन्ति अबहुव्रीहौ समासे नाशीतिशब्दे । द्वादश एवं द्वाविंशतिः द्वात्रिंशत् । अष्टादश अष्टाविंशतिः अष्टात्रिंशत् । त्रयोदश त्रयोविंशतिः त्रयस्त्रिंशत् । अनशीताविति किं द्व्यशीतिः त्र्यशीतिः अबहुव्रीहाविति किं द्विदशाः अष्टदशाः त्रिदशाः ॥

**चत्वारिंशदादौ वा** ॥ १४७ ॥ द्वा अष्टा त्रयस् इत्यादेशाश्चत्वारिंशदादौ उत्तरपदे वा भवन्ति । द्वाचत्वारिंशत् द्विचत्वारिंशत् । अष्टाचत्वारिंशत् अष्टचत्वारिंशत् त्रयश्चत्वारिंशत् त्रिचत्वारिंशत् इत्यादि ॥ महत् वीर इत्याभ्यां सुः महांश्चासौ वीरश्चेति विगृह्य समासे । महतः करवासविशिष्टे डा इत्यधिकृत्य ॥

**जातीयैकार्थे** ॥ १४८ ॥ महतः जातीयप्रत्यये समानाधिकरणे च परतो डा भवति । ड इत् अन्त्याजादिलुगर्थः महावीरः एवं महागुण इत्यादि ॥ क्षीरमुदकं यस्येति विगृह्य समासे ॥

**नाम्न्युत्तरपदस्य च** ॥ १४९ ॥ उत्तरपदस्य पूर्वपदस्य च उदकशब्दस्य उद इत्यादेशो भवति नाम्नि समासे । क्षीरोदः एवं लवणोदादयः उदपर्वतः उदमेघः ॥

**स्रुग्वा** ॥ १९० । नाम्नि पूर्वपदस्य उत्तरपदस्य च स्रुग्वा भवति । सत्या भामा सत्यभामा इत्यादि ॥ पृषद् दरं यस्येति विगृह्य समासे ॥

**पृषोदरादयः** ॥ १९१ ॥ पृषोदरादयः शब्दाः साधवो वेदितव्याः । पृषोदरः अश्व इव तिष्ठतीत्यश्वत्थः पिशितमश्नातीति पिशाचः इत्यादि शिष्टप्रयोगानुसारेण वेदितव्यम् ॥

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥

वर्णागमो गवेन्द्रादौ सिंहे वर्णविपर्ययः ।
षोडशादौ विकारस्स्याद्वर्णनाशः पृषोदरे ॥

वर्णनाशविकाराभ्यां धातोरतिशयेन यः ।
योगस्तदुच्यते प्राज्ञैर्मयूरभ्रमरादिषु ॥




॥ इत्यश्लुग्विधिसमाससङ्ग्रहः ॥

---

## ॥ अथ पदवाक्याश्रितं विध्यन्तरमुच्यते ॥

**सम्भ्रमेऽसकृत्** ॥ १ ॥ सम्भ्रमे वर्तमानं पदं वाक्यं वा असकृदनेकवारं प्रयुज्यते । जय जय जय । जिन जिन जिन । अहिरहिरहिः । सर सर सर । हस्त्यागच्छति हस्त्यागच्छति हस्त्यागच्छति । लघु पलायध्वं लघु पलायध्वं लघु पलायध्वम् इत्यादि ॥

**भृशाभीक्ष्ण्याविच्छेदे प्राग् द्विः** ॥ २ ॥ भृशाद्यर्थे वर्तमानं पदं वाक्यं वा शब्दरूपं द्विः प्रयुज्यते । भृशम् अत्यर्थं पचतिपचति आभीक्ष्ण्यं पौनःपुन्यं पचतिपचति पठतिपठति वदवद । अविच्छेदः क्रियान्तराव्यवधानं तत्र । जयजय । एवं नमोनमः । करणंकरणम् इत्यादयः ॥

**प्रोपोत्सं पादपूरणे** ॥ ३ ॥ प्रादीनि शब्दरूपाणि पादपूरणे द्विः प्रयुज्यन्ते ॥

प्रप्रणम्य जिनं भव्यः संसंश्रित्य तपः परम् ।
उपोपपद्यते श्रेयः उदुत्पन्नमहोदयः ॥

**सामीप्येऽधोऽध्युपरि** ॥ ४ ॥ सामीप्ये वर्तमानानि अधस् अधि उपरि इत्येतान्यव्ययानि द्विः प्रयुज्यन्ते । अधोऽधो नरकभूमयः अध्यधिग्रामं वसति लोकः उपर्युपरि स्वर्गपटलानि ॥

**वीप्सायां** ॥ ५ ॥ वीप्सायां वर्तमानं शब्दरूपं द्विः प्रयुज्यते । वृक्षं-वृक्षमभिसिञ्चति । भवेभवे नैव चेतयते ॥ आद्यामन्त्र्यं सम्मत्यसूयाकोपेऽक्षव-न्त्यश्च प्लुत इत्यधिकृत्य ॥

**दूरादामन्त्र्यस्य गुरुर्वैको लनृत्** ॥ ६ ॥ वाक्यस्याक्षु योऽन्त्योऽच् दूरादामन्त्र्यस्य सम्बन्धी अनन्त्यो वा ऋवर्जितो गुरुः लृकारश्च स एकः प्लुतो वा भवति । आगच्छ भो देवदत्ता३ आगच्छ भो दे३वदत्त आगच्छ भो देवदा३त्त आगच्छ भो देवदत्त क्लृ३तशिखा३ क्लृ३तशिख क्लृतशिख । अनृदिति किं कृष्णमित्र ॥

**ओमः प्रारम्भे** ॥ ७ ॥ प्रारम्भे वर्तमानस्योमः प्लुतो वा भवति । ओ३म् (वृ) ऋषभं पवित्रम् ओ३ं श्रीशान्तिरस्तु सुखमस्तु प्रारम्भ इति किम् । ओम् इत्यादि ॥

॥ इति द्विरुक्तप्लुतविधिसङ्ग्रहः ॥

---

## ॥ अथ तद्धितसङ्ग्रहः कथ्यते ॥

तद्धितप्रत्यया द्विप्रकाराः । अर्थान्तरवृत्तयः स्वार्थिकाश्चेति । तत्रार्थान्तर-वृत्तयो यथा । उपगु ङस् इति स्थिते उपगोरपत्यमिति विगृह्य ॥

**प्रागजिताद्ण्** ॥ १ ॥ टो जित इत्यतस्सूत्रात् प्राग्येऽर्थाः कथ्यन्ते तेषु सुबन्तात् अण् प्रत्ययो भवति । इत्यधिकृतं वेदितव्यं ॥

**ङसोऽपत्ये** ॥ २ ॥ षष्ठ्यन्तादपत्येऽर्थे अण् प्रत्ययो भवति। ण इत् आरैजर्थः सुपः श्लुक् ॥

**आरैचोऽच्यादेः** ॥ ३ ॥ प्रकृतेरचामादेरचः आ आर् ऐच् इत्येते अदेशा भवन्ति ञिति णिति च तद्धिते प्रत्यये परे। आसन्न इति उत औत् ॥

**अवस्वयम्भुवः** ॥ ४ ॥ अपदस्योवर्णस्य अव् भवति तद्धिते परे न स्वयम्भुवः । ततः स्वादिः । औपगवः । स्त्रियां टिड्ढणिति ङी । औपगवी । एवं कापटव इत्यादि ॥ दक्षस्यापत्यमिति विगृह्य ॥

**अत इञ्** ॥ ५ ॥ अकारान्तादपत्ये इञ् भवति । ञ इत् । आरैजर्थः एरित्यतो लुक् शेषं प्राग्वत् दाक्षिः । स्त्रियां टिड्ढणिति ङी । दाक्षी॥ गर्गस्यापत्यं वृद्धमिति विगृह्य ॥

**पौत्रादि वृद्धं** ॥ ६ ॥ पौत्राद्यपत्यं वृद्धसंज्ञं भवति ॥

**गर्गादेर्यञ्** ॥ ७ ॥ गर्गादेर्वृद्धेऽपत्ये यञ् भवति । शेषं प्राग्वत् गार्ग्यः गार्ग्यौ बहुत्वे ॥

**यञञोऽगोपवनादिश्यापर्णान्तात्** ॥ ८ ॥ गोत्रे वर्तमानाद्यञः अञश्च प्रत्ययस्य बहुत्वे श्लुग्भवति न स्त्रियां गोपवनादिश्यापर्णान्तं वर्जयित्वा । श्लुचि स्थानिवद्भावाभावात् नारैच् गर्गाः एवं गर्गान् गर्गैरित्यादि ॥ स्त्रियां ॥

**यञोऽपावटात्** ॥ ९ ॥ यञ्प्रत्ययान्तात् स्त्रियां ङी भवति न पावटाभ्यां । लुगत इत्यतो लुचि मत्स्येति यस्य लुक् गार्गी । एवं वात्स्यः वात्सी इत्यादि ॥ गर्गस्यापत्यं युवेति विगृह्य ॥

**प्रपौत्राद्यस्त्री वंश्यज्यायोभ्रात्रोः सति युवा** ॥ १० ॥ स्त्रीवर्जितं प्रपौत्राद्यपत्यं युवसंज्ञं भवति वंश्ये ज्यायसि भ्रातरि च जीवति सतीति युवसंज्ञायां ॥

**वृद्धाद्यूनि** ॥ ११ ॥ यून्यपत्ये वृद्धप्रत्ययान्तादेव प्रत्ययो भवति ॥

**यञिञः** ॥ १२ ॥ यञन्तादिञन्ताच्च यून्यपत्ये फण् भवति । ण इत् । फस्य आयन् गार्ग्यायणः एवं दाक्षायणः ॥ सुधातुरपत्यमिति विगृह्य ॥

**सुधातृव्यासवरुटनिषादचण्डालबिम्बस्याकङ् च** ॥ १३ ॥ सुधा-त्रादिभ्योऽपत्ये इञ् भवति तेषामकङ् चान्तादेशः । अङावितौ सौधातकिः एवं वैयासकिः वारुटकिः नैषादकिः चाण्डालकिः इत्यादि ॥ पुत्रस्यापत्यमिति विगृह्य ॥

**पुनर्भूपुत्रदुहितृननान्दृभ्योऽनन्तरेऽञ्** ॥ १४ ॥ पुनर्भ्वादिभ्यो-ऽनन्तरेऽपत्ये अञ् भवति । पौत्रः एवं पौनर्भवः दौहित्रः नानान्द्रः ॥ कन्याया अपत्यमिति विगृह्य ॥

**कन्यात्रिवेण्योः कनीनत्रिवणौ च** ॥ १५ ॥ कन्यात्रिवेणिभ्यामपत्ये अण् भवति तयोर्यथासङ्ख्यं कनीनत्रिवणादेशौ च भवतः । कानीनः त्रैवणः ॥ शतमातुरपत्यमिति विगृह्य ॥

**सङ्ख्यासम्भद्रान्मातुर्डुर्** ॥ १६ ॥ सङ्ख्यायाः सम्भद्राभ्यां च परा-न्मातृशब्दादपत्ये अण् भवति ऋतो डुरादेशश्च । ड इत् शातमातुरः एवं द्वैमातुरः षाण्मातुरः साम्मातुरः भाद्रमातुरः । दितेरपत्यमिति विगृह्य ॥

**दितेश्च ढण्** ॥ १७ ॥ मण्डूकशब्दाद्दितिशब्दाच्चापत्ये ढण्वा भवति । ढस्य एय् दैतेयः माण्डूकेयः पक्षे ॥

**पत्युत्तरपदयमादित्यदित्यदितिभ्योऽणपवादे चास्वे** ॥ १८ ॥

पत्युत्तरपदात् यमादिभ्यश्च प्रागजितीयेऽखेऽर्थे ञ्यो भवति अणपवादे च । ञ इत् । दैत्यः बृहस्पतेरपत्यं बार्हस्पत्यः । यमस्यापत्यं याम्यः । आदित्यस्यापत्यमादित्यः अदितेरपत्यम् आदित्यः ॥ विनताया अपत्यमिति विगृह्य ॥

**ध्यतः** ॥ १९ ॥ ष्यदन्तादपत्ये ढण् भवति । वैनतेयः एवं सौपर्णेयः ॥ नाभेरपत्यमिति विगृह्य ॥

**इतोऽनिञः** ॥ २० ॥ इदन्ताद् इञ्वर्जितादपत्ये ढण् भवति नेञन्तात् । नाभेयः नैधेयः बालेयः इत्यादि ॥ कल्याण्या अपत्यमिति विगृह्य ॥

**कल्याण्यादेर्ङिन् च** ॥ २१ ॥ कल्याण्यादिभ्योऽपत्ये ढण् भवति ङिन्चान्त्यादेशः । ङ इत् । काल्याणिनेयः । एवं सुभगाया अपत्यमिति विगृह्य ॥

**हृद्भगसिन्धोः** ॥ २२ ॥ हृद्भगसिन्ध्वन्तानां ञिति णिति च तद्धिते परे पूर्वपदस्योत्तरपदस्य चादेरचः आरैचो भवन्ति । सौभागिनेयः एवं सौहार्दः इत्यादि ॥ दास्या अपत्यमिति विगृह्य ॥

**क्षुद्राभ्यो ढ्रण्वा** ॥ २३ ॥ अङ्गहीनाः शीलहीनाश्च स्त्रियः क्षुद्राः ताभ्योऽपत्ये ढ्रण्वा भवति ॥

**लुग्य्वोर्वल्कौ** ॥ २४ ॥ प्रत्ययस्यावयवे कार्ये च वलि क्वौ च परे वकारयकारयोर्लुग् भवति । पक्षे ढण् दासेरः दासेयः । एवं कौलटेरः कौलटेयः इत्यादि ॥ भ्रातुरपत्यमिति विगृह्य ॥

**भ्रातुर्व्यः** ॥ २५ ॥ भ्रातृशब्दादपत्ये व्यो भवति । भ्रातृव्यः ॥ स्वसुरपत्यमिति विगृह्य ॥

**स्वसुश्च छः** ॥ २६ ॥ स्वसृशब्दाद्भ्रातृशब्दाच्चापत्ये छो भवति । स्वस्रीयः । भ्रात्रीयः ॥

**मातृपितृादेर्डुण्डणौ** ॥ २७ ॥ मातृपितृपूर्वात्स्वसुरपत्ये डुण्छणौ

भवतः । ङित्वात् ऋतो लुक् । उरिति षिः । मातृष्वसुरपत्यं मातृष्वसेयः मातृष्वस्रीयः एवं पैतृष्वसेयः पैतृष्वस्रीयः ॥ कुलस्यापत्यमिति विगृह्य ॥

**कुलात् खः** ॥ २८॥ कुलशब्दादपत्ये खो भवति । ख ईन् कुलीनः ॥

**दुःकुलाड्ढण्** ॥ २९ ॥ दुःकुलशब्दादपत्ये ढण् वा भवति । पक्षे खः दुःकुलस्यापत्यं दौष्कुलेयः दुष्कुलीनः ॥

**महाकुलादञ्खञ्** ॥ ३० ॥ महाकुलशब्दादपत्ये अञ्खञौ वा भवतः। पक्षे खः महाकुलस्यापत्यं माहाकुलः माहाकुलीनः महाकुलीनः ॥

**श्वशुराद्यः** ॥ ३१ ॥ श्वशुरशब्दादपत्ये यो भवति । श्वशुरस्यापत्यं श्वशुर्यः ॥

**जातौ राज्ञः** ॥ ३२ ॥ राजन्शब्दादपत्ये यो भवति जातौ क्षत्रियत्वे गम्यमाने ॥

**येऽनोऽट्ये** ॥३३॥ ट्यण्वर्जिते यप्रत्यये अनो लुग्न भवति । राज्ञोऽपत्यं राजन्यः । जाताविति किम् । अन्यत्राणेव ॥

**अणि** ॥ ३४ ॥ अण्यनो लुग्न भवति । राजनः ॥

**क्षत्राद् घः** ॥ ३५ ॥ क्षत्रशब्दादपत्ये घो भवति जातिश्चेत् । घस्य इय् क्षत्रियः अन्यत्र क्षात्रिः ॥ मनोरपत्यमिति विगृह्य ॥

**मनोर्याणषक् च** ॥ ३६ ॥ मनुशब्दादपत्ये याणौ भवतः तस्य षगागमश्च । अकावितौ । मनुष्यः मानुषः इत्यादि ॥

**पृथिव्या ञाञ्** ॥३७॥ पृथिवीशब्दात् प्राग्जितीयेऽर्थे ञाञौ भवतः । पृथिव्या अपत्यं पार्थिवः स्त्रियां पार्थिवी पार्थिवा ॥

**देवाद्यञ्च** ॥ ३८ ॥ देवशब्दात्प्राग्जितीयेऽर्थे यञञौ भवतः । देवस्यापत्यं दैव्यः दैवः स्त्रियां दैवी ॥

**स्त्रीपुंसात् टूनञ्स्नञ्स्नञ्वत:** ॥ ३९ ॥ स्त्रीपुंसशब्दाभ्यां वत्प्रत्ययाप्राग्येऽर्थास्तेषु च टूनञ् स्नञ् इत्येतौ प्रत्ययौ यथासङ्ख्यं भवतः । टञावितौ । स्त्रियाः अपत्यं स्त्रैणः । पुंसोऽपत्यं पौंस्नः । पदस्येति सलुक् ॥

**राष्ट्रराज्ञः सरूपाद्राजापत्येऽञ्द्रिः** ॥ ४० ॥ राष्ट्रवाचिनो राजवाचिनश्च सरूपाच्छब्दाद्राजन्यपत्ये चार्थे अञ् भवति द्रिसंज्ञश्च। विदेहानां राजा वैदेहः वैदेहौ ॥

**बहुष्वस्त्रियां** ॥ ४१ ॥ बहुषु वर्तमानस्य द्रेः श्लुग् भवति न स्त्रियां । विदेहाः एवं पाञ्चालः पाञ्चालौ पञ्चालाः । विदेहस्यापत्यं वैदेहः वैदेहौ विदेहाः इत्यादि । अस्त्रियामिति किं । वैदेह्यः पाञ्चाल्यः ॥ भिक्षाणां समूह इति विगृह्य ॥

**भिक्षादेश्च समूहे** ॥ ४२ ॥ भिक्षादेरन्यस्माच्च समूहेऽर्थे अणादयो भवन्तीत्यण्। भैक्षं। गर्भिणीनां समूहो गार्भिणं यौवनं काकं मायूरम् इत्यादि ॥

**गोत्रोक्षवत्सोष्ट्राजोरभ्रवृद्धमनुष्यराजन्यराजपुत्रराज्ञो वुञ्** ॥ ४३ ॥ गोत्रवाचिन उक्षादिभ्यश्च समूहे वुञ् भवति ॥

**वोरकः** ॥ ४४ ॥ प्रत्ययस्य वोरको भवति । औपगवानां समूहः औपगवकम् । उक्ष्णां समूहः औक्षकम् एवं वात्सकम् औष्ट्रकम् आजकम् औरभ्रकं वार्द्धकं मानुष्यकं राजन्यकं राजपुत्रकं राजकं ॥

**केदारा ण्यश्च** ॥ ४५ ॥ केदारशब्दात् समूहे वुञ् ण्यश्च भवतः । केदाराणां समूहः कैदारकं कैदार्यं ॥

**ब्राह्मणमाणवबाडवाद्यः** ॥ ४६ ॥ ब्राह्मणादिभ्यः समूहे यो भवति । ब्राह्मणानां समूहो ब्राह्मण्यम् एवं माणव्यं बाडव्यं ॥

**कवचिहस्त्यचित्ताच्च ठण्** ॥ ४७ ॥ कवचिहस्तिभ्यामचित्तवाचिनः केदारशब्दाच्च समूहे ठण् भवति ॥

**इक् ठः** ॥ ४८ ॥ प्रत्ययावयवस्य ठ इक् भवति। कवचिनां समूहः कावचिकं हस्तिनां समूहः हास्तिकम् आपूपिकं कैदारिकं ॥

**धेनोरनञः** ॥ ४९ ॥ अनञ्पूर्वाद्धेनोः समूहे ठण् भवति ॥

**दोस्सिुसुगशश्वदकस्मात्तः कः** ॥ ५० ॥ दोस्शब्दात् इसुसन्तादुगन्तात् शश्वदकस्माद्वर्जिततकारान्ताच्च परस्य प्रत्ययस्य ठ॰ को भवति। अदित्। धेनूनां समूहो धैनुकम् अनञिति किम् आधेनवं ॥

**गणिकाया ण्यः** ॥ ५१ ॥ गणिकाशब्दात्समूहे ण्यो भवति। गणिकानां समूहो गाणिक्यं ॥

**केशाद्वा** ॥ ५२ ॥ केशशब्दात्समूहे ण्यो वा भवति। पक्षे ठण्। कैश्यं कैशिकं ॥

**छोऽश्वात्** ॥ ५३ ॥ अश्वशब्दात् समूहे छो वा भवति। पक्षेऽण्। छ ईय्। अश्वानां समूहः अश्वीयम् आश्वं ॥

**गोरथवातात्त्रकड्योलं** ॥ ५४ ॥ गोरथवातेभ्यः समूहे यथासङ्ख्यं त्र कड्य ऊल इति प्रत्यया भवन्ति। गवां समूहो गोत्रा रथानां समूहो रथकड्या वलि पदत्वान्नातो लुक् वातानां समूहो वातूलः ॥

**पाशादेश्च यः** ॥ ५५ ॥ पाशादेर्गवादेश्च समूहे यो भवति। पाशानां समूहः पाश्या एवं तृण्या खल्या गव्या रथ्या वात्या ॥

**ग्रामजनबन्धुगजसहायात्तल्** ॥ ५६ ॥ ग्रामादिभ्यः समूहे तल् भवति। ल इत्। ग्रामाणां समूहो ग्रामता। वलि पदत्वान्नातो लुक्। जनता बन्धुता गजता सहायता। वनस्पतीनां समूहो वानस्पत्यं स्त्रीणां समूहः स्त्रैणम् एवं पौंस्नम् इत्यादि ॥

**श्वखलादिभ्योऽञिन्** ॥ ५७ ॥ श्वादिभ्यः समूहे अञ् भवति खलादिभ्य इन् । शुनां समूहः शौवं दण्डिनां समूहो दाण्डं खलानां समूहः खलिनी ॥

**पुरुषात् कृतहितवधविकारे च ढञ्** ॥ ५८ ॥ पुरुषशब्दात् कृताद्यर्थे समूहे च ढञ् भवति । ढ एय् । पुरुषेण कृतः पुरुषाय हितः पुरुषस्य वधः पुरुषस्य विकारः पुरुषाणां समूहो वा पौरुषेयः ॥ भस्मनो विकार इति विगृह्य ॥

**विकारे** ॥ ५९ ॥ षष्ठ्यन्ताद्विकारे यथायोगमणादयो भवन्ति । द्रव्यस्यावस्थान्तरं विकारः तत्राण् भास्मनः । मृत्तिकाया विकारो मार्त्तिकः ॥

**विकारापत्येऽश्महितनाम्नो वा** ॥ ६० ॥ अश्मन् हितनामन् इत्येतयोरन्याजादेर्यथासङ्ख्यं विकारेऽपत्ये च तद्धिते परे लुग्वा भवति । अश्मनो विकार आश्मः आश्मनः हैतनामः हैतनामनः ॥

**त्रपुजतोः षक्** ॥ ६१ ॥ त्रपुजतुभ्यां विकारे अण् भवति तयोः षक् चागमः । त्रपुणो विकारस्त्रापुषं जातुषं ॥

**कंसीयाञ्ञ्यः** ॥ ६२ ॥ कंसीयशब्दात् विकारे ञ्यो भवति यस्य लुक् च । कंसीयस्य विकारः कांस्यं ॥

**कौशेयं** ॥ ६३ ॥ कोशस्य विकारः कौशेयमिति निपात्यते ॥

**हेमादिभ्योऽञ्** ॥ ६४ ॥ हेमादिभ्यो विकारे चावयवे चाञ् भवति । हेम्नो विकारोऽवयवो वा हैमं विष्टरम् । एवं राजतं सौवर्णमित्यादि ॥

**वाऽभक्ष्याच्छादने मयट्** ॥ ६५ ॥ षष्ठ्यन्ताद्विकारेऽवयवे च मयड्वा भवति न भक्ष्याच्छादनयोः । भस्मनो विकारः भस्ममयं । पक्षे अणादि एवं कपोतस्य विकारः कपोतमयं कापोतं दूर्वामयं दौर्वं खदिरमयं खादिरम् अभक्ष्याच्छादन इति किं मौद्गः सूपः कार्पासः पटः ॥

**शराद्येकाचः** ॥ ६६ ॥ शरादिभ्यः एकाचश्च विकारावयवयोर्मयड् भवति । शरस्य विकारः शरमयम् एवं दर्भमयं मृन्मयं वाङ्मयमित्यादि ॥ धनस्य विकार इति विगृह्य ॥

**नाम दुः** ॥ ६७ ॥ नाम दुसंज्ञं वा भवति ॥

**दोरप्राणिनः** ॥ ६८ ॥ अप्राणिनो दुसंज्ञाद्विकारावयवयोः मयड् भवति । धनमयम् । एवं रुपन्मयं । पक्षे अणादि । धानं दार्षदम् इत्यादि ॥

**त्यदादिः** ॥ ६९ ॥ त्यदादिर्दुसंज्ञो नित्यं भवति । दुसंज्ञकत्वान्मयट् । तस्य विकारस्तन्मयम् एवं यन्मयं त्वन्मयं मन्मयं ॥

**यस्याच्चामादिरादैच्** ॥ ७० ॥ यस्याचामादिरच् आदैज्वा भवति स दुसंज्ञो भवति । आम्रमयं सालमयं तैलमयमित्यादि ॥

**गोव्रीह्येः शकृत्पुरोडाशे** ॥ ७१ ॥ गोव्रीहिभ्यां विकारेऽवयवे च मयड् भवति यथासङ्ख्यं शकृति पुरोडाशे चार्थे । गोर्विकारो गोमयं शकृत् अन्यत्र गव्यं व्रीहिमयः पुरोडाशः अन्यत्र व्रैहं ॥

**पिष्टिका हैयङ्गवीनं** ॥ ७२ ॥ एतौ विकारे साधू वेदितव्यौ । पिष्टस्य विकारः पिष्टिका ह्योगोदोहस्य विकारः हैयङ्गवीनं ॥

**बहुलं श्लुक्पुष्पमूले** ॥ ७३ ॥ विकारावयवयोर्विहितस्य प्रत्ययस्य बहुलं श्लुग् भवति पुष्पे मूले च वाच्ये । मल्लिकायाः विकारः पुष्पं मल्लिका एवं यूथिका नवमालिका मालती । बृहत्या अवयवो मूलं बृहती पाठा इत्यादयः । क्वचिन्न भवति कारहाटमित्यादि ॥

**फले** ॥ ७४ ॥ विकारावयवप्रत्ययस्य श्लुग् भवति फले वाच्ये । आमलक्याः विकारः फलम् आमलकम् एवं बदरमाम्रमित्यादि । हरीतक्या विकारः फलं हरीतकी । एवं द्राक्षादयोऽपि नियतलिङ्गाः ॥

**प्लक्षादेरण्** ॥ ७५ ॥ प्लक्षादिभ्यो विकारावयवयोः अण् भवति फले वाच्ये । लुचोऽपवादः । प्लक्षस्य विकारः फलं प्लाक्षम् एवमौदुम्बरं कारवेल्लमित्यादि ॥

**जम्ब्वा वा** ॥ ७६ ॥ जम्बूशब्दाद्विकारावयवयोरण्वा भवति फले वाच्ये । जम्ब्वा विकारः फलं जाम्बवं । पक्षे लुच्युभयथा लिङ्गं । जम्बु जम्बूः ॥ सिद्धान्तस्य बोद्धाऽध्येता वेति विगृह्य ॥

**बोद्ध्रध्येत्रोः** ॥ ७७ ॥ षष्ठ्यन्ताद् बोद्धर्यध्येतरि चार्थे अणादयो भवन्तीत्यण् । सैद्धान्तः । एवं नैमित्तिकः मौहूर्तिकः छान्दसः वैद्यः इत्यादि ॥ व्याकरणस्य बोद्धा अध्येता वेति विगृह्य अणि सति ॥

**पदे व्वष्टैच्** ॥ ७८ ॥ आरैच्प्रातेरच आदेशयोर्यवयोः पदे परतः टैच् भवति । ट इदादिविध्यर्थः । वैयाकरणः ॥

**न्यायादिपदकल्पलक्षणान्तक्रत्वाख्यानाख्यायिकाट्ठण्** ॥ ७९ ॥ न्यायादिभ्यः पदकल्पलक्षणान्तेभ्यः क्रत्वाख्यानाख्यायिकावाचिभ्यश्च बोद्ध्रध्येत्रोः ठण् भवति । न्यायस्य बोद्धा अध्येता वा नैयायिकः एवं तार्किकः पौराणिकः वैजपदिकः जैनयज्ञकल्पिकः शाब्दलक्षणिकः काल्पयज्ञिकः कौतुककल्पिकः वासवदत्तिकः इत्यादि ॥

**अधर्मक्षत्रसंसर्गाङ्गत्रेर्विद्यायाः** ॥ ८० ॥ विद्याशब्दान्ताद्बोद्ध्रध्येत्रोः ठण् भवति न धर्मादिपूर्वात् । सार्वविद्यिकः चातुर्दशविद्यिकः अधर्मादेरिति किं । धार्मविद्यः क्षात्रविद्यः सांसर्गविद्यः आङ्गविद्यः त्रैविद्यः ॥ शाकटायनीयस्य बोद्धा अध्येता वेति विगृह्य अणि सति ॥

**प्रोक्तात्** ॥ ८१ ॥ प्रोक्तप्रत्ययान्ताद्विहितस्य बोद्ध्रध्येतृप्रत्ययस्य लुग् भवति । शाकटायनीयः जैनेन्द्रः इत्यादि ॥

**मातृपितुर्भ्रातर्युलड्व्यं** ॥ ८२ ॥ मातृशब्दादुलड् भवति पितृशब्दाड्व्यः भ्रातर्यर्थे । डित् मातुर्भ्राता मातुलः एवं पितृव्यः ॥

**पित्रोर्डामहट्** ॥ ८३ ॥ मातृपितृशब्दाभ्यां डामहट् भवति प्रत्येकं मातरि पितरि चार्थे । डटावितौ पितुः पिता पितामहः पितामही माता । मातुः पिता मातामहः मातामही माता ॥

**राजन्यादिभ्यो वुञ्** ॥ ८४ ॥ राजन्यादिभ्यो राष्ट्रे वुञ् भवति । राजन्यानां राष्ट्रं राजन्यकम् एवं वैराटकं मालवकमित्यादि ॥

**निवासादूरभवाविति देशे नाम्नि** ॥ ८५ ॥ निवासे अदूरभवे च षष्ठ्यन्तादण् भवति देशे नाम्नि । ऋजुनावो निवासः आर्जुनावः वराणसाया अदूरभवा वाराणसी ॥

**सोऽस्त्यस्मिन्** ॥ ८६ ॥ प्रथमान्तात् सोऽस्मिन्नस्तीत्यर्थे अणादयो भवन्ति देशे नाम्नि । उदुम्बरास्सन्त्यस्मिन् औदुम्बरं नगरमित्यादि ॥

**तेन निर्वृत्तश्च** ॥ ८७ ॥ तृतीयान्तात्तेन निर्वृत्तेऽर्थे देशनाम्नि अण् भवति । सगरैर्निर्वृत्तस्सागरः ॥

**कुमुदनडवेतसमहिषाड्डित्** ॥ ८८ ॥ कुमुदादिभ्यो निवासाद्यर्थे डित् मतुर्भवति देशे नाम्नि । कुमुदानां निवासः कुमुद्वान् एवं नड्वान् वेतस्वान् महिष्मान् ॥

**नडशाडाड्वलः** ॥ ८९ ॥ नडशाडाभ्यां निवासाद्यर्थे डिड्वलो भवति देशे नाम्नि । नड्वलः शाड्वलः ॥

**शर्करायाष्ठण्काण् च** ॥ ९० ॥ शर्कराशब्दात् निवासाद्यर्थे ठ कण् ठण् छ अण् इत्येते प्रत्यया भवन्ति देशे नाम्नि । शर्कराणां निवासः शार्करिकः शार्करकः शार्करिकः शर्करीयः शार्करः ॥ पौषी पौर्णमासी अस्येति विगृह्य ॥

**सास्य पौर्णमासी** ॥ ९१ ॥ प्रथमान्तात् सास्य पौर्णमासीत्यस्मिन्नर्थे ठग्वा भवति । चैत्री पौर्णमासी अस्येति चैत्रिकः चैत्रो वा । एवं कार्तिकिकः कार्तिको वा फाल्गुनिकः फाल्गुनो वा श्रावणिकः श्रावणो वा ॥ अर्हन् देवता अस्येति विगृह्य ॥

**देवता** ॥ ९२ ॥ प्रथमान्तात् साऽस्य देवतेत्यस्मिन्नर्थे अणादयो भवन्ति । इत्यण् आर्हतः एवं जैनः सौगतः शैवः वैष्णवः इत्यादि ॥

**महेन्द्राद्वा** ॥ ९३ ॥ महेन्द्रशब्दात्सास्य देवतेत्यस्मिन् अर्थे छघौ वा भवतः । महेन्द्रो देवता अस्येति महेन्द्रीयः महेन्द्रियः माहेन्द्रो बलिः ॥

**कसोमाद्व्यण्** ॥ ९४ ॥ कसोमशब्दाभ्यां सास्य देवतेत्यस्मिन्नर्थे व्यण् भवति । टणावितौ कः परमात्मा देवता अस्य कायः कायी पूजा परत्वादात् सोमो देवतास्य सौम्यः ॥

**युद्धेऽर्थयोद्धृभ्यः** ॥ ९५ ॥ अर्थः प्रयोजनं तद्वाचिनो योद्धृवाचिनश्च प्रथमान्तात् षष्ठ्यर्थे युद्धे वाच्ये अणादयो भवन्ति । सुलोचना प्रयोजनमस्य युद्धस्य सौलोचनं विद्याधरा योद्धारोऽस्य वैद्याधरं युद्धं ॥

**प्रहरणात् क्रीडायां णः** ॥ ९६ ॥ प्रहरणवाचिनः सप्तम्यर्थे क्रीडायां णो भवति । मुष्टिः प्रहरणमस्यां क्रीडायां मौष्टा एवं दाण्डा इत्यादि ॥ कुसुम्भेन रक्तमिति विगृह्य ॥

**टो रागाद्रक्ते** ॥ ९७ ॥ तृतीयान्ताद्रागवाचिनः तेन रक्तमित्यस्मिन्नर्थे अणादयो भवन्तीत्यण् । कौसुम्भं वस्त्रं कौङ्कुमं हारिद्रमित्यादि ॥

**लाक्षारोचनाट्ठण्** ॥ ९८ ॥ लाक्षारोचनाभ्यां रक्ते ठण् भवति । लाक्षया रक्तं लाक्षिकं रौचनिकं ॥

**चन्द्रोपेतात्काले** ॥ ९९ ॥ चन्द्रोपेतान्नक्षत्रवाचिनः तेन युक्ते काले अणादयो भवन्तीत्यण् । पुष्येण चन्द्रोपेतेन युक्ता पौर्णमासी ॥

**तैषपौषन्भात्** ॥ १०० ॥ नक्षत्रवाचिनो विहिते प्रत्यये परे तिष्यपुष्य-शब्दयोस्तैषपौषौ निपात्येते । पौषी तैषी । चित्रया चन्द्रोपेतया युक्ता पौर्णमासी चैत्री विशाखया वैशाखी ज्येष्ठया ज्यैष्ठी अषाढया आषाढी भद्रपदया भाद्रपदी अश्वयुजा आश्वयुजी कृत्तिकाभिः कार्तिकी मृगशीर्षेण मार्गशीर्षी मघाभिर्माघी फल्गुन्या फाल्गुनी ॥

**श्रवणाश्वत्थान्नाम्न्यः** ॥ १०१ ॥ चन्द्रोपेताभ्यां श्रवणाश्वत्थाभ्यां युक्ते काले अप्रत्ययो भवति नाम्नि विषये । श्रवणेन चद्रोपेतेन युक्ता पौर्णमासी श्रवणा एवमश्वत्था ॥ वस्त्रेण च्छन्नो रथ इति विगृह्य ॥

**च्छन्ने रथे** ॥ १०२ ॥ तृतीयान्ताच्छन्ने रथेऽर्थे अणादयो भवन्तीत्यण् । वास्त्रो रथः एवं काम्बलो गौण इत्यादि ॥

**स्थण्डिले शेते व्रती** ॥ १०३ ॥ स्थण्डिलशब्दात् सप्तम्यन्तात् शेते इत्यस्मिन्नर्थेऽण् भवति व्रतिनि वाच्ये । स्थण्डिले शेत इति स्थाण्डिलो व्रती ॥

**संस्कृते भक्ष्ये** ॥ १०४ ॥ सप्तम्यन्तात् तत्र संस्कृते भक्ष्येऽर्थे अणादयो भवन्तीत्यण् । भ्राष्ट्रे संस्कृताः भ्राष्ट्राः अपूपाः ॥

**कल्यग्नेर्ढण्** ॥ १०५ ॥ कल्यग्निभ्यां प्राग्जितीये अर्थे ढण् भवति । कलौ संस्कृतं कालेयम् अग्नौ संस्कृतम् आग्नेयं ॥

**शूल्योख्यक्षैरेयदाधिकौदश्वित्कौदश्वितं** ॥ १०६ ॥ शूल्यादयः संस्कृते अर्थे साधवो वेदितव्याः । शूले संस्कृतं शूल्यम् । उखायामुख्यं क्षीरे क्षैरेयं दध्नि दाधिकम् उदश्वित्यौदश्वित्कम् औदश्वितं वा ॥

**क्वचित्** ॥ १०७ ॥ उक्तार्थेभ्यः क्वचिदन्यत्राप्यर्थे अणादयो भवन्ति । इत्यण् चक्षुषा गृह्यत इति चाक्षुषं रूपम् । एवं श्रावणः शब्दः उदूखलेन पिष्टम्

औदूखलं कलौ दृश्यते कालेयं मिथ्यात्वम् अश्वैरुह्यते आश्वो रथः ॥ नद्यां जातो भवो वेति विगृह्य ॥

**नद्यादिराष्ट्रदूरोत्तराड्ढण्घैल्याहञ्** ॥१०८॥ जितात् प्राक् येऽर्था वक्ष्यन्ते तेषु कृतादिषु नद्यादेर्ढण् भवति राष्ट्राद् घः दूरादेत्यः उत्तरादाहञ् । अणपवादः । नादेयः एवं राष्ट्रियः दूरेत्यः औत्तराहः ॥

**पारावारावारपारेभ्यः खः** ॥ १०९ ॥ पार अवार पारावार अवारपार इत्येतेभ्यः प्राग्जितीयेऽर्थे खो भवति । पारे जातो भवो वा पारीणः एवमवारीणः पारावारीणः अवारपारीणः ॥

**ग्रामाद्यखञ्** ॥ ११० ॥ ग्रामशब्दात् प्राग्जितीयेऽर्थे कृतादौ यखञौ भवतः । ग्रामे कृत इत्यादि विगृह्य ग्राम्यः ग्रामीणः ॥

**कल्यादेश्च ढकञ्** ॥ १११ ॥ कल्यादेर्ग्रामाच्च प्राग्जितीयेऽर्थे कृतादौ ढकञ् भवति । कालेयकः पुष्करे जातः पौष्करेयकः एवं ग्रामेयकः ॥

**कुलकुक्षिग्रीवाच्छ्वास्यलङ्कारे** ॥ ११२ ॥ कुलादिभ्यो यथासङ्ख्यं श्वादिषु वाच्येषु प्राग्जितीयेऽर्थे ढकञ् भवति । कुले जातः कौलेयकः श्वा एवं कौक्षेयकोऽसिः ग्रैवेयकोऽलङ्कारः ॥

**दक्षिणापश्चात्पुरसस्त्यण्** ॥ ११३ ॥ दक्षिणादिभ्यः प्राग्जितीयेऽर्थे कृतादौ त्यण् भवति । दक्षिणायां जातः दाक्षिणात्यः एवं पाश्चात्यः पौरस्त्यः ॥

**केहामातस्त्रात्त्यच्** ॥ ११४ ॥ कादिभ्यस्तसन्तात् त्रान्ताच्च प्राग्जितीयेऽर्थे त्यच् भवति । च इत् । क जात इत्यादि । क्वत्यः इहत्यः अमात्यः कुतस्त्यः अत्रत्यः इत्यादि ॥

**वैषमोह्यःश्वसः** ॥ ११५ ॥ ऐषमस् ह्यस् श्वस् इत्येतेभ्यः प्राग्जितीयेऽर्थे त्यच्वा भवति । पक्षे तनट् ऐषमो जातः ऐषमस्त्यः ऐषमस्तनः एवं ह्यस्त्यः ह्यस्तनः श्वस्त्यः श्वस्तनः ॥

**द्युदक्प्रागपाक्प्रतीचो यः** ॥ ११६ ॥ दिवादिभ्यः प्राग्जितीयेऽर्थे यो भवति । दिवि भवं दिव्यम् एवमुदीच्यं प्राच्यम् अपाच्यं प्रतीच्यं ॥

**भवतष्ठण्छस्** ॥ ११७ ॥ भवच्छब्दात् प्राग्जितीये अर्थे ठण्छसौ भवतः । णसावितौ । भवतः इदं भावत्कं भवदीयं । सिति पदत्वाज्जश् ॥

**जनपरराज्ञोऽक्छः** ॥ ११८ ॥ जनादिभ्यः प्राग्जितीये अर्थे अक्छो भवति । जनस्येदं जनकीयम् एवं परकीयं राजकीयं ॥

**दोश्छः** ॥ ११९ ॥ दुसंज्ञकात्प्राग्जितीये अर्थे छो भवति । तस्येदं तदीयम् एवं त्वदीयं मदीयम् ॥

**उष्णादिभ्यः कालात्** ॥ १२० ॥ उष्णादेः परो यः कालशब्दस्तदन्तात् प्राग्जितीये अर्थे छो भवति । उष्णकाले भवः । उष्णकालीयः । एवं शीत कालीयः ॥

**व्यादिभ्यः ठण्णिठौ** ॥ १२१ ॥ व्यादिभ्यः परो यः कालशब्दः तदन्तात् प्राग्जितीये अर्थे ठण्णिठौ भवतः । णितावितौ विकाले भवः वैकालिकः एवं पौर्वकालिकः सार्वकालिकः ऐदङ्कालिकः स्त्रियां वैकालिकी वैकालिका इत्यादि ॥

**समुद्रान्नृनावोः** ॥ १२२ ॥ समुद्रशब्दात् प्राग्जितीये कृताद्यर्थे वुञ् भवति नरि नावि च वाच्ययोः । समुद्रे भवः सामुद्रको ना । स्त्रियाम् आङि । त्यायदाद्यत इति इत् सामुद्रिका नौः । अन्यत्राणेव । सामुद्रं लवणं ॥

**वा** ॥ १२३ ॥ पर्वतशब्दात् प्राग्जितीये अर्थे छो वा भवति । पक्षेऽण् । पर्वते भवं पर्वतीयं पार्वतमित्यादि ॥

**युष्मदस्मदोऽञ्खञौ वाकङ्चैकस्मिंस्तवकममकं** ॥ १२४ ॥ युष्मदस्मद्भ्यां प्राग्जितीये अर्थे अञ्खञौ वा भवतः तयोराकङ्चान्तादेशः एकत्वविशिष्टेऽर्थे तवकममकादेशौ । युष्माकमयं यौष्माकः यौष्माकीणः अस्माक–

मयम् आस्माकः आस्माकीनः तवायं तावकः तावकीनः ममायं मामकः मामकीनः । स्त्रियां यौष्माकी यौष्माकीणा । आस्माकी आस्माकीना तावकी तावकीना मामकीना ॥

**नरिका मामिका** ॥ १२५ ॥ नरिका मामिकेति स्त्रियां निपात्येते । ममेयं मामिका पक्षे छः । युष्मदीयः अस्मदीयः ॥

**योऽर्धात्** ॥ १२६ ॥ अर्धशब्दात् प्रागजितीये यो भवति । अर्धे भवमर्ध्यं ॥

**सादेष्ठण्** ॥ १२७ ॥ सपूर्वपदादर्धात् प्रागजितीये ठण् भवति । विजयार्धे भवो वैजयार्धिकः । एवमौत्तरार्धिकमित्यादि ॥

**समानादिलोकोत्तरपदाध्यात्मादिभ्यष्ठण्** ॥ १२८ ॥ समानपूर्वपदाल्लोकोत्तरपदात् अध्यात्मादिभ्यश्च प्रागजितीये ठण् भवति ॥

**अनुशतिकादीनाम्** ॥ १२९ ॥ अनुशतिक इत्येवमादीनां ञ्णिति परे पूर्वोत्तरपदयोरारैचो भवन्ति । समानग्रामे भवः सामानग्रामिकः एवम् ऐहलौकिकः पारलौकिकः अध्यात्मं भवम् आध्यात्मिकम् एवमाधिदैविकं सामानिकमित्यादि ॥

**वर्षाकालेभ्यः** ॥ १३० ॥ वर्षाशब्दात् कालविशेषवाचिभ्यश्च प्रागजितीये ठण् भवति । वर्षासु भवो वार्षिकः एवं मासिकः दैवसिकः ॥

**निशाप्रदोषहेमन्तात्** ॥ १३१ ॥ निशादिभ्यः प्रागजितीये ठण् वा भवति । पक्षेऽण् । निशायां भवः नैशिकः नैशो वा । प्रादोषिकः प्रादोषो वा हैमन्तिकः ॥

**लुक्तोऽणि** ॥ १३२ ॥ अणि हेमन्तस्य तो लुग्वा भवति । हैमनः हैमन्तो वा ॥

**श्वसस्तट् च** ॥ १३३ ॥ श्वसः प्रागजितीये ठण् वा भवति तस्य तट् च । श्वो भवः शौवस्तिकः पक्षे श्वस्त्यः ॥

**पूर्वाह्णापराह्णात्तनट्** ॥ १३४ ॥ पूर्वाह्णापराह्णाभ्यां प्रागजितीये तनड्वा भवति । पूर्वाह्णे भवः पूर्वाह्णेतनः पौर्वाह्णिकः अपराह्णतनः एवमा-पराह्णिकः ॥

**सायंचिरंप्राह्णेप्रगेऽव्ययात्** ॥ १३५ ॥ सायमादिभ्य अव्ययाच्च काल-वाचिनः प्रागजितीये तनड् भवति । ट इत् ङ्यर्थः । साये जातः साय-न्तनः एवं चिरन्तनः प्राह्णेतनः प्रगेतनः पुरातनः इदानींतनः श्वस्तनः ह्यस्तनः इत्यादि ॥

**पुराणं** ॥ १३६ ॥ पुराभवं पुराणमिति निपात्यते । पुराणकविः ॥

**भर्तुसन्ध्यादेरण्** ॥ १३७ ॥ नक्षत्रऋतुवाचिभ्यः सन्ध्यादिभ्यश्च प्राग-जितीये अण् भवति । पुष्ये जातः पौषः एवं माघः वासन्तः शारदः सान्ध्यः शाश्वतः । शश्वतष्ठणपि शाश्वतिकः ॥

**प्रावृष एण्यः** ॥ १३८ ॥ प्रावृषः प्रागजितीये एण्यो भवति । प्रावृषि भवः प्रावृषेण्यः ॥

**ण्योऽन्वब्धिद्वीपात्** ॥ १३९ ॥ अब्धिसमीपे वर्तमानाद् द्वीपात् प्राग-जितीये ण्यो भवति । द्वीपे जातः द्वैप्यः अन्वब्धीति किं नदीसमीपे द्वैपः ॥

**पश्चादाद्यन्ताग्रादिमः** ॥ १४० ॥ पश्चादादिभ्यः प्रागजितीये इमो भवति ॥

**स्वरादीनां** ॥ १४१ ॥ स्वरादीनामव्ययानाम् अपदान्तानामन्त्याजादेर्लुग् भवति तद्धिते परे । पश्चाज्जातः पश्चिमः एवमादिमः अन्तिमः अग्रिमः ॥

**मध्यान्मः** ॥ १४२ ॥ मध्यशब्दात् प्रागजितीये मो भवति । मध्ये जातो मध्यमः ॥

**उत्कर्षापकर्षयोरः** । १४३ ॥ उत्कर्षापकर्षयोर्मध्ये वर्तमानान्मध्य-

शब्दात्प्रागजितीये अद्भवति । मध्ये जातो मद्धः ॥ प्रागुक्तानामणादीनां ढणादीनाञ्च प्रत्ययानामर्थविशेषा इतो दर्शयिष्यन्ते ॥

**ङेः कृतलब्धक्रीतसम्भूते** ॥ १४४ ॥ सप्तम्यन्तात् कृते लब्धे क्रीते सम्भूते वाऽर्थे यथायोगमणादयो ढणादयश्च भवन्ति । स्रुघ्ने कृतो लब्धः क्रीतस्सम्भूतो वा स्रौघ्नः एवं माथुरः नादेयः राष्ट्रिय इत्यादि ॥

**कुशले** ॥ १४५ ॥ सप्तम्यन्तात्कुशलेऽर्थेऽणादयो भवन्ति । स्रुघ्ने कुशलः स्रौघ्नः । एवं माथुरः । नादेयः इत्यादि ॥

**पथोऽकः** ॥ १४६ ॥ पथः कुशले अको भवति । पथि कुशलः पथकः ॥

**जाते** ॥ १४७ ॥ सप्तम्यन्तात् जातेऽर्थे अणादयो भवन्ति । स्रुघ्ने जातः स्रौघ्नः एवं माथुरः नादेय इत्यादि ॥

**प्रावृषष्ठः** ॥ १४८ ॥ प्रावृषो जातेऽर्थे ठो भवति । प्रावृषि जातः प्रावृषिकः ॥

**कालात्साधुपुष्प्यत्पच्यमाने** ॥ १४९ ॥ कालवाचिनः सप्तम्यन्तात्साधौ पुष्प्यति पच्यमाने चार्थे यथायोगं प्रत्ययो भवति । निशायां साधुः नैशिकः नैशो वा प्रदीपः वसन्ते पुष्प्यन् वासन्तः सहकारः शरदि पच्यन्ते शारदाः सप्तच्छदाः ॥

**उप्ते** ॥ १५० ॥ सप्तम्यन्तात् कालवाचिनः उप्तेऽर्थे यथायोगं प्रत्ययो भवति । ग्रीष्मे उप्ताः ग्रैष्माः शालयः ॥

**ग्रीष्मवसन्ताद्वा** ॥ १५१ ॥ ग्रीष्मवसन्ताभ्यामुप्तेऽर्थे वुञ्वा भवति । ग्रीष्मे उप्तं ग्रैष्मकं ग्रैष्मं । वासन्तकं वासन्तं ॥

**देये ऋणे** ॥ १५२ ॥ सप्तम्यन्तात् कालवाचिनः देये ऋणे यथायोगं प्रत्ययो भवति । मासे देयमृणं मासिकम् एवं सांवत्सरिकमित्यादि ॥

**स्वति मृगे** ॥ १५३ ॥ सप्तम्यन्तात् कालवाचिनो स्वति मृगेऽर्थे यथा-योगं प्रत्ययो भवति । निशायां स्वन् नैशिको मृगः नैशो वा ॥

**जयिनि च** ॥ १५४ ॥ सप्तम्यन्तात् कालवाचिनः जयिन्यर्थे यथा-योगं प्रत्ययो भवति । प्रदोषे जयी प्रादोषिकः प्रादोषः इत्यादि । चानुकर्षणात् काल इति निवृत्तं ॥

**भवे** ॥ १५५ ॥ सप्तम्यन्तात् भवे सत्यर्थे यथायोगं प्रत्ययो भवति । स्रुघ्ने भवः स्रौघ्नः । एवं माथुरः नादेय इत्यादि ॥

**दिगाद्यङ्गांशाद्यः** ॥ १५६ ॥ दिगादिभ्यः शरीरावयववाचिभ्यः च सप्तम्यन्तेभ्यः भवेऽर्थे यो भवति । दिशि भवो दिश्यः एवं वर्ग्यः मुख्यः ओष्ठ्यः उरस्यः मूर्धन्यः इत्यादि ॥

**मध्याच्छणदिना मक् च** ॥ १५७ ॥ मध्यशब्दाद् भवेऽर्थे छणदिना भवन्ति मक् चागमः । मध्ये भवो मध्यमीयः माध्यमः मध्यंदिनः ॥

**जिह्वामूलाङ्गुलेश्च छः** ॥ १५८ ॥ जिह्वामूलाङ्गुलिभ्यां मध्याच्च भवेऽर्थे छो भवति । जिह्वामूले भवो जिह्वामूलीयः एवमङ्गुलीयः मध्यीयः ॥

**वर्गान्तात्** ॥ १५९ ॥ वर्गान्तात् भवेऽर्थे च्छो भवति । कवर्गे भवः कवर्गीयः एवं चवर्गीय इत्यादि ॥

**यखौ चाशब्दे** ॥ १६० ॥ वर्गान्ताद्भवे यखौ छश्च भवन्ति न शब्दे । मुनिवर्ग्यः मुनिवर्गीणः मुनिवर्गीयः अशब्द इति किं कवर्गीयः ॥

**गम्भीरपञ्चजनबहिर्देवात्** ॥ १६१ ॥ गम्भीरादिभ्यो भवे ञ्यो भवति । गम्भीरे भवो गाम्भीर्यः पाञ्चजन्यः स्वरादित्वादन्त्याजादिलुक् बाह्यः दैव्यः ॥

**अन्तःपूर्वात्** ॥ १६२ ॥ अन्तश्शब्दपूर्वादव्ययीभावाद्भवेऽर्थे ठण् भवति । अन्तरगारे भवः आन्तरगारिकः आन्तर्वसतिकः इत्यादि ॥

**ङसौ व्याख्याने च ग्रन्थात्** ॥ १६३ ॥ षष्ठ्यन्तात् व्याख्याने सप्तम्यन्ताच्च भवेऽर्थे ग्रन्थवाचिनः अणादयो भवन्ति । सुपां व्याख्यानं सुप्सु भवं वा सौपम् एवं तैङं कार्तमित्यादि ॥

**ऋगद्व्यच्इज्याभ्यष्ठण्** ॥ १६४ ॥ ऋक्शब्दात् द्व्यच्कात्ऋवर्णान्तात् इज्या-वाचिनश्च व्याख्याने भवे चार्थे ठण् भवति । ऋचां व्याख्यानं तत्र भवं वा आर्चिकं सौत्रिकं वार्त्तिकम् आग्निहोतृकं सामयिकं काल्याणिकम् इत्यादि ॥

**ङसः स्वे** ॥ १६५ ॥ षष्ठ्यन्तात् स्वे सम्बन्धिनि यथायोगमणादयो भवन्ति । उपगोरिदम् औपगवम् आर्हतं मतं । गाङ्गं नादेयमित्यादि ॥

**यः** ॥ १६६ ॥ रथात् रथान्ताच्च स्वेऽर्थे यो भवति । रथस्यायं रथ्यः महारथ्य इत्यादि ॥

**वाह्यपथ्युपकरणे** ॥ १६७ ॥ वाहनात् स्वे वाह्यपथ्युपकरणे चाञ् भवति नान्यत्र । अश्वस्य वाह्यः आश्वो रथः आश्वः पन्थाः आश्वं पल्ययनम् इत्यादि ॥

**ङसेरागते** ॥ १६८ ॥ पञ्चम्यन्तादागतेऽर्थे यथायोगमणादयो भवन्ति । स्रुघ्नादागतः स्रौघ्नः एवं माथुरः नादेयः । कुतःकुत आगतः कौतस्कुत इत्यादि ॥

**विद्यायोनिसम्बन्धाद्वुञ्** ॥ १६९ ॥ विद्यासम्बन्धाद्योनिसम्बन्धाच्च वुञ् भवति । आचार्यादागतमाचार्यकम् उपाध्यायादागतमौपाध्यायकम् इत्यादि । पितामहादागतं पैतामहकमित्यादि ॥

**ऋष्ठण्** ॥ १७० ॥ ऋकारान्ताद्विद्यायोनिसम्बन्धवाचिन आगते ठण् भवति । पितुरागतं पैतृकं मातृकं भ्रातृकमित्यादि ॥

**पित्र्यं वा** ॥ १७१ ॥ पितृशब्दादागते पित्र्यमिति वा निपात्यते । पितु-रागतं पित्र्यं पक्षे ठण् ॥

**आयस्थानात्** ॥ १७२ ॥ आयस्थानवाचिन आगते ठण् भवति । शुल्कशालाया आगतं शौल्कशालिकम् एवमापणिकं ॥

**शुण्डिकादेरण्** ॥ १७३ ॥ शुण्डिकादेरागते अण् भवति । शुण्डिकः सुरापणः तस्मादागतं शौण्डिकम् । एवमौदपानमित्यादि ॥

**नृहेतुभ्यो मयड्रूप्यौ वा** ॥ १७४ ॥ नरवाचिनो हेतुवाचिनश्चागते मयड्रूप्यौ वा भवतः । पक्षे अणादि देवदत्तादागतं देवदत्तमयं देवदत्तरूप्यम् अत्र वलि पदत्वान्नातो लुक् दैवदत्तं देवदत्तीयं वा कर्मणः आगतं कर्ममयं कर्मरूप्यं कार्मणं वा इत्यादि ॥

**प्रभवति** ॥ १७५ ॥ पञ्चम्यन्तात् प्रभवत्यर्थे अणादयो भवन्ति । हिमवतः प्रभवन्ती हैमवती गङ्गा जैनी दिव्यभाषा ॥

**त्यदादेर्मयट्** ॥ १७६ ॥ त्यदादेः प्रभवत्यर्थे मयड् भवति । तस्मात् प्रभवत् तन्मयम् इत्यादि ॥

**वैडूर्यः** ॥ १७७ ॥ विडूरशब्दस्य प्रभवति वैडूर्य इति निपात्यते ॥

**टः प्रोक्ते** ॥ १७८ ॥ तृतीयान्तात् प्रोक्तेऽर्थे व्याख्यातेऽर्थे वा यथायोगमणादयो भवन्ति । भद्रबाहुणा प्रोक्तानि भाद्रबाहवाणि उत्तराध्ययनानि एवं सामन्तभद्रम् आकलङ्कं जैनेन्द्रमित्यादि ॥ यस्याक्वादिरादैच् इति दुसंज्ञायां ॥ दोश्छः ॥ शाकटायनेन प्रोक्तं शाकटायनीयं पाणिनीयं जैमिनीयम् इत्यादि ॥

**एकदिशि** ॥ १७९ ॥ तृतीयान्तादेकदिशि यथायोगमणादयो भवन्ति । सुदाम्ना एकदिक् सौदामनी नादेयी इत्यादि ॥

**तस्** ॥ १८० ॥ तृतीयान्तादेकदिशि तस् भवति । सुदाम्ना एकदिक् सुदामतो विद्युत् एवं पीलुमूलतो विद्युत् इत्यादि । तस्वदित्यव्ययम् ॥

**उपज्ञाते** ॥ १८१ ॥ तृतीयान्तादुपज्ञाते प्रथमतो ज्ञाते यथायोगमणादयो भवन्ति । अर्हता प्रथमतो ज्ञातम् आर्हतं प्रवचनं सामन्तभद्रं महाभाष्यमित्यादि ॥

**नाम्नि कृते** ॥ १८२ ॥ टान्तात् कृते यथायोगमणादयो भवन्ति प्रत्ययान्तं चेत् कस्य चिन्नाम भवेत् । मक्षिकाभिः कृतं माक्षिकं मधु एवं क्षौद्रमित्यादि ॥

**ग्रन्थे** ॥ १८३ ॥ टान्तात् कृते ग्रन्थे यथायोगं प्रत्ययो भवति । वररुचिना कृतानि वाररुचानि वाक्यानि एवं शाकटायनीयानि व्याकरणसूत्राणि ॥

**अमोऽधिकृत्य** ॥ १८४ ॥ द्वितीयान्तादधिकृत्य कृते ग्रन्थे यथाविहितं प्रत्ययो भवति । सुभद्रामधिकृत्य कृतं सौभद्रं रौक्मिणं सुभद्रारत्नावलीश्रीमती-कल्याणादयः उपचारतः सिद्धाः ॥

**ज्योतिषं** ॥ १८५ ॥ द्वितीयान्तादधिकृत्य कृते ग्रन्थे ज्योतिषमिति निपात्यते । ज्योतींष्यधिकृत्य कृतो ग्रन्थो ज्योतिषं ॥

**गच्छति पथि दूते** ॥ १८६ ॥ द्वितीयान्तात् गच्छति पथि दूते च यथायोगं प्रत्ययो भवति । स्रुघ्नं गच्छन् स्रौघ्नः पन्थाः दूतो वा । एवं माथुरः नादेय इत्यादि ॥

**अभिनिष्क्रामति द्वारे** ॥ १८७ ॥ द्वितीयान्तादभिनिष्क्रामति द्वारे-ऽर्थे यथायोगमणादयो भवन्ति । स्रुघ्नमभिनिष्क्रामति द्वारं स्रौघ्नम् एवं नादे-यमित्यादि ॥

**भजति** ॥ १८८ ॥ द्वितीयान्ताद्भजत्यर्थे यथायोगं प्रत्ययो भवति । अर्हन्तं भजन् आर्हतः एवं जैनपत्यः नादेय इत्यादि ॥

**महाराजाच्चित्तादेशकालाट्ठण्** ॥ १८९ ॥ देशकालवर्जिताभ्यां महाराजाच्चित्ताभ्यां भजति ठण् भवति । महाराजं भजन् माहाराजिकः एवमापू-पिकः शाष्कुलिकः इत्यादि । अदेशकालादिति किं स्रौघ्नः पूर्वाह्णतनः ॥

**सौर्निवासादस्य** ॥ १९० ॥ प्रथमान्तान्निवासवाचिनः षष्ठ्यर्थे यथायोगं प्रत्ययो भवति । स्रुघ्नो निवासोऽस्य स्रौघ्नः एवं माथुरः नादेय इत्यादि ॥

**ठण्** ॥ १९१ ॥ इत ऊर्ध्वं येऽर्था वक्ष्यन्ते तेषु ठण् प्रत्ययो भवतीत्यधिक्रियते यावद्य इति सूत्रं ॥

**टो जितजयद्दीव्यत्खनत्सु** ॥ १९२ ॥ तृतीयान्ताज्जितादिष्वर्थेषु ठण् भवति । अक्षैर्जितः जयन् दीव्यन् वा आक्षिकः खनित्रेण खनन् खानित्रिकः ॥

**संस्कृते** ॥ १९३ ॥ टान्तात् संस्कृते ठण् भवति । दध्ना संस्कृतं दाधिकं उपाध्यायेन संस्कृत औपाध्यायिकः ॥

**कोपान्त्यकुलत्थादण्** ॥ १९४ ॥ कोपान्त्यात् कुलत्थशब्दाच्च संस्कृते अण् भवति । तिन्त्रिणीकेन संस्कृतं तैन्त्रिणीकं कुलत्थेन संस्कृतं कौलत्थं ॥

**तरति** ॥ १९५ ॥ टान्तात्तरति ठण् भवति । उडुपेन तरन् औडुपिकः गोपुच्छेन तरन् गौपुच्छिकः ॥

**नौद्व्यचष्ठः** ॥ १९६ ॥ टान्तात् नौशब्दाद्व्यच्काच्च तरति ठो भवति । नावा तरन् नाविकः एवं घटिकः प्लविकः । स्त्रियां नाविका ॥

**चरति** ॥ १९७ ॥ टान्ताच्चरति गच्छति भक्षयति वा ठण् भवति । शकटेन चरन् शाकटिकः शृङ्गवेरेण चरन् शार्ङ्गवेरिकः ॥

**पर्पादेष्ठट्** ॥ १९८ ॥ टान्तात् पर्पादेश्चरति ठट् भवति । ट इत् पर्पेण चरन् पर्पिकः एवं दाण्डिकः रथिकः ॥

**पदिकः** ॥ १९९ ॥ पादशब्दस्य चरति पदिक इति निपात्यते । पद्भ्यां चरन् पदिकः ॥

**वेतनादेर्जीवति** ॥ २०० ॥ टान्तात् वेतनादेर्जीवति ठण् भवति । वेतनेन जीवन् वैतनिकः एवमापणिकः इत्यादि ॥

**वस्नक्रयविक्रयेभ्यष्ठः** ॥ २०१ ॥ एभ्यो जीवति ठो भवति। वस्नेन मूल्येन जीवन् वस्निकः क्रयिकः विक्रयिकः क्रयविक्रयिकः ॥

**छश्चायुधात्** ॥ २०२ ॥ टान्तादायुधशब्दात् जीवति छठौ भवतः। आयुधेन जीवन् आयुधीयः आयुधिकः ॥

**विवधवीवधात्** ॥ २०३ ॥ टान्ताभ्यां विवधवीवधाभ्यां हरति ठठणौ भवतः। विवधेन हरन् विवधिकः वैवधिकः एवं वीवधिकः वैवधिकः ॥

**निर्वृत्तेऽक्षद्यूतादेः** ॥ २०४ ॥ टान्तात् अक्षद्यूतादेर्निर्वृत्ते ठण् भवति। अक्षद्यूतेन निर्वृत्तम् आक्षद्यूतिकम् एवं जाङ्घाप्रहतिकं मौष्टिकं प्राहरिकमित्यादि ॥

**भावादिमः** ॥ २०५ ॥ टान्तात् भावप्रत्ययान्तात् निर्वृत्ते इमो भवति। पाकेन निर्वृत्तं पाकिमम् एवमौपपादिमं सम्मूर्छिममित्यादि ॥

**याचितापमित्यात् कण्** ॥ २०६ ॥ टान्तात् याचितादपमित्य इत्यव्ययाच्च निर्वृत्ते कण् भवति। याचितेन निर्वृत्तं याचितकम् अपमित्य निर्वृत्तमापमित्यकं ॥

**संसृष्टे** ॥ २०७ ॥ टान्तात् संसृष्टे ठण् भवति। दध्ना संसृष्टमन्नं दाधिकम् एवं पैप्पलिकमित्यादि ॥

**चूर्णलवणमुद्गादिनाण्** ॥ २०८ ॥ टान्तात् चूर्णात् संसृष्टे इन् भवति लवणादः मुद्गादण्। चूर्णेन संसृष्टाः चूर्णिनोऽपूपाः लवणेन संसृष्टो लवणः ओदनः मुद्गैस्संसृष्टमन्नं मौद्गं ॥

**व्यञ्जनैरुपसिक्ते** ॥ २०९ ॥ टान्ताद्व्यञ्जनादुपसिक्ते ठण् भवति। सूपेनोपसिक्तं सौपिकम् एवं दाधिकम् इत्यादि ॥

**ओजस्सहोऽम्भसा वर्तते** ॥ २१० ॥ टान्तादोजसादेर्वर्त्तमाने ठण् भवति । ओजसा वर्तमानः औजसिकः एवं साहसिकः आम्भसिकः ॥

**परेर्मुखपार्श्वात्** ॥ २११ ॥ परिपूर्वाभ्यां मुखपार्श्वाभ्यां वर्त्तमाने ठण् भवति । परिमुखं वर्तमानः सेवकः पारिमुखिकः पारिपार्श्विकः ॥

**रक्षदुञ्छतोः** ॥ २१२ ॥ द्वितीयान्तात् रक्षत्युञ्छति चार्थे ठण् भवति । नगरं रक्षन् नागरिकः बदराण्युञ्छन् बादरिकः एवं नैवारिकः पानसिक इत्यादि ॥

**मीनमत्स्यपक्षिमृगार्थात् घ्नति** ॥ २१३ ॥ मीनमत्स्याभ्यां पक्षिमृगार्थाभ्यां च द्वितीयान्तेभ्यो घ्नति ठण् भवति । मीनान् घ्नन् मैनिकः एवं मात्स्यिकः पाक्षिकः शाकुनिकः मार्गिकः कौरङ्गिकः इत्यादि ॥

**परिपन्थं तिष्ठति च** ॥ २१४ ॥ द्वितीयान्तात् परिपन्थशब्दात् तिष्ठति घ्नति चार्थे ठण् भवति । परिपन्थं तिष्ठन् घ्नन् वा पारिपन्थिकः ॥

**पश्चात्यनुपदात्** ॥ २१५ ॥ पश्चादर्थे वर्तमानात् द्वितीयान्तादनुपदाद्धावति ठण् भवति । अनुपदं धावन् आनुपदिकः ॥

**परदारादीन् यति** ॥ २१६ ॥ द्वितीयान्तात्परदारादेर्गच्छति ठण् भवति । परदारान् गच्छन् पारदारिकः । एवं गौरुतल्पिकः । इत्यादि ॥

**पदोत्तरपदपदार्थललामप्रतिकण्ठाद्गृह्णति** ॥ २१७ ॥ पदोत्तरपदात् पदादिभ्यश्च गृह्णति ठण् भवति । प्रतिपदं गृह्णन् प्रातिपदिकः पादिकः आर्थिकः लालामिकः प्रातिकण्ठिकः ॥

**धर्माधर्मौ चरति** ॥ २१८ ॥ द्वितीयान्ताभ्यां धर्माधर्माभ्यां चरति अनुतिष्ठति ठण् भवति । धर्मं चरन् धार्मिकः । एवमाधर्मिकः ॥

**समूहान् समवेते** ॥ २१९ ॥ द्वितीयान्तेभ्यः समूहवाचिभ्यः समवेते ठण् भवति । समूहं समवेतः सामूहिकः एवं सामाजिक इत्यादि ॥

**परिषदं ण्यः** ॥ २२० ॥ द्वितीयान्तात् परिषच्छब्दात् समवेते ण्यो भवति । परिषदं समवेतः पारिषद्यः ॥

**सेनां वा** ॥ २२१ ॥ द्वितीयान्तात् सेनाशब्दात् समवेते ण्यो वा भवति। सेनां समवेतः सैन्यः सैनिको वा ॥

**सुस्नातादीन् पृच्छति** ॥ २२२ ॥ द्वितीयान्तेभ्यः सुस्नातादिभ्यः पृच्छति ठण् भवति । सुस्नातं पृच्छन् सौस्नातिकः । सौखरात्रिक इत्यादि ॥

**प्रभूतादिभ्यो ब्रुवति** ॥ २२३ ॥ प्रभूतादिभ्यो ब्रुवत्यर्थे ठण् भवति । प्रभूतं ब्रुवन् प्राभूतिकः एवं पार्यातिकः इत्यादि ॥

**शाब्दिकदार्दरिकलालाटिककौक्कुटिकाः** ॥ २२४ ॥ शाब्दिकादयः प्रसिद्धेऽर्थे ठगन्ता निपात्यन्ते । शब्दमविनष्टमुच्चारयन् शाब्दिकः दर्दरं वादित्र-विशेषं वादयन् दार्दरिकः ललाटं पश्यन् लालाटिकः सेवकः कुक्कुटीवाल्पेन देशेन चरन् कौक्कुटिकः ॥

**वक्रये** ॥ २२५ ॥ षष्ठ्यन्ताद्वक्रये ठण् भवति । आपणस्य वक्रयः आपणिकः एवं नैवासिक इत्यादि ॥

**तदस्य पण्यं** ॥ २२६ ॥ प्रथमान्तात् षष्ठ्यर्थे पण्ये वाच्ये ठण् भवति । अपूपाः पण्यमस्य आपूपिकः शाष्कुलिकः ताम्बूलिकः । इत्यादि ॥

**शिल्पं** ॥ २२७ ॥ प्रथमान्तात् षष्ठ्यर्थे ठण् भवति प्रथमान्तं चेत् शिल्पं स्यात् । नृत्तं शिल्पमस्य नार्त्तिकः एवं गैतिकः वादनिकः मार्दङ्गिकः इत्यादि ॥

**प्रहरणं** ॥ २२८ ॥ प्रथमान्तात् षष्ठ्यर्थे ठण् भवति प्रथमान्तं चेत् प्रहरणं स्यात् । असिः प्रहरणमस्य आसिकः एवं चाक्रिकः धानुष्क इत्यादि ॥

**शक्तियष्ट्योष्टीकण्** ॥ २२९ ॥ प्रथमान्ताभ्यां शक्तियष्टिभ्यां टीकण् भवति प्रथमान्तं चेत् प्रहरणं । शक्तिः प्रहरणमस्येति शाक्तीकः याष्टीक इत्यादि ॥

**दैष्टिकास्तिकनास्तिकाः** ॥ २३० ॥ दैष्टिकादयष्ठणन्ता निपात्यन्ते । दिष्टिर्दैवं प्रमाणमस्येति दैष्टिकः अस्ति परलोकादिमतिरस्य आस्तिकः तद्विपरीतो नास्तिकः ॥

**शीलं** ॥ २३१ ॥ प्रथमान्तात् षष्ठ्यर्थे ठण् भवति प्रथमान्तं चेत् शीलं स्वभावः स्यात् । अपूपभक्षणं शीलमस्य आपूपिकः एवं दाधिकः सार्पिष्कः इत्यादि ॥

**छत्त्रादेरञ्** ॥ २३२ ॥ छत्त्रादिभ्यस्तदस्य शीलमित्यस्मिन्नर्थे अञ् भवति। छत्त्रवच्छीलमस्य छात्त्रः शिक्षा शीलमस्य शैक्षः इत्यादि ॥

**तूष्णीकः** ॥ २३३ ॥ तूष्णीम्भावः शीलमस्येति अस्मिन्नर्थे तूष्णीक इति निपात्यते ॥

**तत्र नियुक्ते** ॥ २३४ ॥ सप्तम्यन्तान्नियुक्तेऽर्थे ठण् भवति। शुल्कशालायां नियुक्तः शौल्कशालिकः एवमापणिक इत्यादि । द्वारे नियुक्त इति ठणि ॥

**द्वारादेः** ॥ २३५ ॥ द्वारादेर्य्वयोः ञ्णिति तद्धिते टैच् भवति । दौवारिकः ॥

**ठोऽगारान्तात्** ॥ २३६ ॥ अगारान्तान्नियुक्ते ठो भवति । देवागारे नियुक्तः देवागारिकः एवं कोष्ठागारिकः ॥

**अध्यायिन्यदेशकालात्** ॥ २३७ ॥ अयोग्यदेशकालवाचिनः अध्यायिन्यर्थे ठण् भवति । अशुचावध्यायी आशुचिकः सन्ध्यायामध्यायी सान्ध्यिकः एवं श्माशानिकः औल्किकः इत्यादि ॥

चन्द्रसूर्योपरागश्च निर्घातो भूमिकम्पनम् ।
दिग्दाहो गर्जितं विद्युदुल्का सन्ध्योत्सवोऽशुचिः ॥
श्मशानाभ्याश इत्यप्यदेशकालादयः स्मृताः ॥

**निकटादिषु वसति** ॥ २३८ ॥ निकटादिभ्यस्तत्र वसतीत्यर्थे ठण् भवति । निकटे वसन् नैकटिकः एवं वार्क्षमूलिकः ॥

**सतीर्थ्यः** ॥ २३९ ॥ समाने तीर्थे वसन् सतीर्थ्य इति निपात्यते ॥

**चन्द्रायणं च चरति** ॥ २४० ॥ गोदानादिभ्यः चन्द्रायणशब्दाच्च चरत्यर्थे ठण् भवति । गोदानं चरन् गौदानिकः एवमानगारिकः चान्द्रायणिकः इत्यादि ॥

**देवव्रतादीन् डिन्** ॥ २४१ ॥ देवव्रतादिभ्यश्चरति डिन् भवति । ड इत् । देवव्रतं चरन् देवव्रती एवं तिलव्रती ॥

**संशयं प्राप्तेऽर्थे** ॥ २४२ ॥ संशयशब्दात्तं प्राप्तेऽर्थे ठण् भवति । संशयं प्राप्तः सांशयिकः ॥

**पथष्ठण्** ॥ २४३ ॥ पथो याति ठण् भवति । पन्थानं यान् पथिकः ॥

**नित्यं णः पन्थश्च** ॥ २४४ ॥ पथो नित्यं याति णो भवति पथः पन्थादेशश्च । पन्थानं नित्यं यान् पान्थः ॥

**योगादये शक्ते** ॥ २४५ ॥ योगादेस्तस्मै शक्ते ठण् भवति । योगाय शक्तः यौगिकः । एवं सान्तापिकः इत्यादि ॥

**योग्यकार्मुके** ॥ २४६ ॥ शक्ते एतौ निपात्येते । योगाय शक्तः योग्यः कर्मणे शक्तः कार्मुकः ॥

**काले कार्ये च भववत्** ॥ २४७ ॥ कालवाचिनस्तत्र देये कार्ये च भव-

वत्प्रत्ययो भवति। वर्षासु देयं कार्यं वा वार्षिकम्। एवं मासिकं नैशं नैशि-कमित्यादि ॥

**तेन हस्तयथाकथाचाद्यणं** ॥ २४८ ॥ हस्तयथाकथाचाभ्यां तेन देये कार्ये च यथासङ्ख्यं यणौ भवतः। हस्तेन देयं कार्यं वा हस्त्यम्। एवं याथाकथाचं ॥

**सम्पादिनि** ॥ २४९ ॥ तृतीयान्तात्सम्पादिनि ठण् भवति। कुण्ड-लाभ्यां सम्पादि कौण्डलिकं मुखम् एवमाङ्गदिकौ बाहू इत्यादि ॥

**कर्मवेषाद्यः** ॥ २५० ॥ कर्मवेषाभ्यां सम्पादिनि यो भवति। कर्मणा सम्पादि कर्मण्यं दैवं वेष्यो नटः ॥

**कालात्परिजय्यलभ्यकार्यसुकरे** ॥ २५१ ॥ कालवाचिनः परिजय्या-द्यर्थे ठण् भवति। मासेन परिजय्यो मासिको व्याधिः। एवं मासेन लभ्यः कार्यः सुकरो वा मासिकः पट इत्यादि ॥

**निर्वृत्ते** ॥ २५२ ॥ कालवाचिनो निर्वृत्ते ठण् भवति। मासेन निर्वृत्तो मासिकः एवं रात्रिकः इत्यादि ॥

**समयात्प्राप्तात्** ॥ २५३ ॥ समयादस्य प्राप्त इत्यस्मिन्नर्थे ठण् भवति। समयः प्राप्तोऽस्य सामयिकं कार्यम् ॥

**ऋत्वादिभ्योऽण्** ॥ २५४ ॥ ऋत्वादिभ्योऽस्य प्राप्ते अण् भवति। ऋतुः प्राप्तोऽस्यार्त्तवं पुष्पादि। एवं यौद्धमित्यादि ॥

**कालाद्यः** ॥ २५५ ॥ कालादस्य प्राप्त इत्यस्मिन्नर्थे यो भवति। कालः प्राप्तोऽस्य काल्यमध्ययनं ॥

**प्रयोजनं** ॥ २५६ ॥ प्रथमान्तात्तदस्य प्रयोजनमित्यस्मिन्नर्थे ठण् भवति।

जिनमहः प्रयोजनमस्य जैनमहिकम् एवं नैष्टिकः मौक्तिकः । व्यवहारः प्रयोजनमस्येति ठणि टैचि प्राप्ते ॥

**अस्वङ्गादेः** ॥ २५७ ॥ व्यतिहारे अप्रत्ययान्तस्य स्वङ्गादेश्च ञ्णिति तद्धिते आदेरचः आरैचौ भवन्ति । व्यावहारिकः इत्यादि ॥

**चूलादिभ्योऽण्** ॥ २५८ ॥ चूलादिभ्यः प्रयोजने अण् भवति । चूला प्रयोजनमस्य चौलं कर्म एवं श्राद्धमित्यादि ॥

**उत्थापनादेश्छः** ॥ २५९ ॥ उत्थापनादेः प्रयोजने छो भवति । उत्थापनं प्रयोजनमस्य उत्थापनीयं गीतम् । एवमनुवादनीयमित्यादि ॥

**स्वर्गस्वस्तिवाचनादिभ्यो यलुक्** ॥ २६० ॥ स्वर्गादेः प्रयोजने यो भवति स्वस्तिवाचनादेष्टणः लुक् । स्वर्गः प्रयोजनमस्य स्वर्ग्यम् एवं यशस्यम् इत्यादि । स्वस्तिवाचनं प्रयोजनमस्य स्वस्तिवाचनम् एवं शान्तिवाचनमित्यादि ॥

**मूल्यैः क्रीते** ॥ २६१ ॥ मूल्यवाचिनस्तेन क्रीते ठण् भवति । सततया क्रीतं साततिकम् एवमाशीतिकमित्यादि ॥

**तस्य वापे** ॥ २६२ ॥ षष्ठ्यन्ताद्वापे क्षेत्रे ठण् भवति । प्रस्थस्य वापः प्रास्थिकं क्षेत्रम् एवं द्रौणिकमित्यादि ॥

**ईशे** ॥ २६३ ॥ पृथिवीसर्वभूमिभ्यामीशे अञ् भवति । पृथिव्या ईशः पार्थिवः सार्वभौमः ॥

**लोकसर्वलोकात्** ॥ २६४ ॥ लोकसर्वलोकाभ्यां ज्ञाते ठण् भवति । लोकस्य ज्ञातः लौकिकः एवं सार्वलौकिकः ॥

**मानं** ॥ २६५ ॥ प्रथमान्तात्तदस्य मानमित्यस्मिन्नर्थे ठण् भवति । प्रस्थो मानमस्य प्रास्थिको राशिः एवं कौडुविक इत्यादि ॥ चत्वारि प्रमाणमस्येति विगृह्य ॥

**सङ्ख्याडतेश्चाशत्तिष्टेः कः** ॥ २६६ ॥ सङ्ख्यावाचिनो डत्यन्तात् त्रिंशद्विंशतिभ्यां च माने को भवति न शत्तिष्ट्यन्तात् । चतुष्कम् एवमष्टकं दशकं कतिकं त्रिंशत्कं विंशतिकम् अशत्तिष्टेरिति किं । चात्वारिंशत्कं साप्ततिकं षाष्टिकं ॥

**पञ्चद्दशद्वर्गे वा** ॥ २६७ ॥ एतौ माने वा निपात्येते वर्गे विधेये । पक्षे कः । पञ्चमानमस्येति पञ्चत् पञ्चको वा वर्गः दशत् दशको वा ॥

**स्तोमे डट्** ॥ २६८ ॥ सङ्ख्यायास्तदस्य मानमित्यस्मिन्नर्थे डड् भवति स्तोमेऽभिधेये । डटावितौ । द्वादशमानमस्य द्वादशः स्तोमः एवं चतुर्विंश इत्यादि ॥

**अर्हति** ॥ २६९ ॥ द्वितीयान्तादर्हति ठण् भवति । आन्दोलमर्हन् आन्दोलिकः एवं श्वैतच्छत्रिक इत्यादि ॥

**पात्रात्** ॥ २७० ॥ पात्रशब्दादर्हति यघौ भवतः । पात्र्यः पात्रियः ॥

**कडङ्गरदक्षिणास्थालीबिलाच्छयौ** ॥ २७१ ॥ कडङ्गरादिभ्योऽर्हति छयौ भवतः । कडङ्गरमर्हन् कडङ्गरीयः कडङ्गर्यो वा गौः । एवं दक्षिणीयो दक्षिण्यो वा ब्राह्मणः । स्थालीबिलीयाः स्थालीबिल्या वा तण्डुलाः ॥

**शालीनकौपीनार्त्विजीनाः** ॥ २७२ ॥ एते अर्हति निपात्यन्ते । शालायाः प्रवेशमर्हन् शालीनो मुहूर्त्तादिः कूपप्रवेशमर्हन् कौपीनं वस्त्रखण्डम् ऋत्विजमर्हन् आर्त्विजीनो यजमानः ॥

**वैरङ्गिकः** ॥ २७३ ॥ विरागशब्दात्तन्नित्यमर्हति ठण् प्रत्ययो विरङ्गादेशश्च निपात्यते । विरागमर्हन् वैरङ्गिकः साधुः ॥

**यः** ॥ २७४ ॥ अधिकारोयं ॥

**वहति रथग्रामसङ्गात्** ॥ २७५ ॥ रथग्रासङ्गाभ्यां वहति यो भवति । रथं वहन् रथ्यः एवं प्रासङ्ग्यः ॥

**धुरो यढण्** ॥ २७६ ॥ धुरो वहति यढणौ भवतः । धुरं वहन् धुर्यः धौरेयो वा ॥

**वामाद्यादेः खः** ॥ २७७ ॥ वामादिपूर्वाद्धुरो वहति खो भवति । वामधुरं वहन् वामधुरीणः एवं सर्वधुरीण इत्यादि ॥

**शकटादण्** ॥ २७८ ॥ शकटशब्दाद्वहत्यण् भवति । शकटं वहन् शाकटो गौः ॥

**हलसीराट्ठण्** ॥ २७९ ॥ हलसीराभ्यां वहति ठण् भवति । हलं वहन् हालिकः एवं सैरिकः ॥

**धनगणं लब्धा** ॥ २८० ॥ धनगणाभ्यां लब्धरि यो भवति। धनं लब्धा धन्यः एवं गण्यः ॥

**पदमस्मिन् दृश्यं** ॥ २८१ ॥ पदशब्दादस्मिन् दृश्यमित्यत्रार्थे यो भवति । पदमस्मिन् दृश्यं पद्यः कर्दमः ॥

**नौविषेण तार्यवध्ये** ॥ २८२ ॥ नौविषाभ्यां यथासङ्ख्यं तार्ये वध्ये चार्थे यो भवति ॥

**ओदौतोऽवाव्यि** ॥ २८३ ॥ ओकारौकारयोः स्थाने यकारादौ प्रत्यये अव् आव् इत्येतौ क्रमेणादेशौ भवतः । नावा तार्यं नाव्यं विषेण वध्यो विष्यः ॥

**न्यायार्थादनपेते** ॥ २८४ ॥ न्यायार्थाभ्याम् अनपेते यो भवति । न्यायादनपेतं न्याय्यम् एवमर्थ्यं ॥

**मदस्य करणे** ॥ २८५ ॥ मदशब्दात् करणे यो भवति । मदस्य करणं मद्यं ॥

**वश्यपथ्यवयस्यधेनुष्यागार्हपत्यजन्यधर्म्यहृद्यमूल्यं** ॥ २८६ ॥ एते यप्रत्ययान्ता निपात्यन्ते। वशं गतो वश्यः पथोऽनपेतं पथ्यं वयसा तुल्यो वयस्यः आ ऋणप्रदानाद्दीयमाना धेनुः धेनुष्या गृहपतिना संयुक्तो गार्हपत्यः जनीं वधूं हरन्तो जन्याः जामातृवयस्याः धर्मादनपेतं धर्मेण प्राप्तं च धर्म्यं हृदयस्य प्रियं हृद्यं मूलेन समो मूल्यः ॥

**तत्र साधौ** ॥ २८७ ॥ सप्तम्यन्तात् साधौ यो भवति। सभायां साधुः सभ्यः एवं कर्मण्यः सामान्य इत्यादि ॥

**पथ्यतिथिवसतिस्वपतेर्ढण्** ॥ २८८ ॥ पथ्यादिभ्यः साधौ ढण् भवति। पथि साधु पाथेयम् एवमातिथेयं वासतेयं स्वापतेयं ॥

**परिषदो ण्यश्च** ॥ २८९ ॥ परिषच्छब्दात् साधौ णो ण्यश्च भवतः। परिषदि साधुः पारिषदः पारिषद्यो वा ॥

**सर्वजनात् खञ्च** ॥ २९० ॥ सर्वजनात्साधौ ण्यः खञ्च भवतः। सर्वजनेषु साधुः सार्वजन्यः सार्वजनीनः ॥

**प्रतिजनादेः** ॥ २९१ ॥ प्रतिजनादेः साधौ खञ् भवति। प्रतिजने साधुः प्रातिजनीनः एवमैदंयुगीनः इत्यादि ॥

**कथादेष्ठण्** ॥ २९२ ॥ कथादेः साधौ ठण् भवति। कथायां साधुः काथिकः एवं नैकटिकः वैतण्डिक इत्यादि ॥

**पाद्यार्घ्ये** ॥ २९३ ॥ एतौ तदर्थे निपात्येते। पादार्थं पाद्यं जलम् अर्घार्थं द्रव्यम् अर्घ्यं ॥

**ण्योऽतिथेः** ॥ २९४ ॥ अतिथिशब्दात्तदर्थे ण्यो भवति। अतिथ्यर्थमातिथ्यं

छः ॥ २९५ ॥ आपादपरिसमाप्तेर्येऽर्था वक्ष्यन्ते तेषु छप्रत्ययो भवति। इत्यधिक्रियते ॥

**तस्मै हितेऽराजाचार्यब्राह्मणवृष्णः** ॥ २९६ ॥ चतुर्थ्यन्तात् हिते छो भवति न राजादेः। सर्वस्मै हितः सर्वीयः एवं वत्सीय इत्यादि। अराजादेरिति किं । ततो वाक्यमेव राज्ञे हितम् आचर्याय हितं ब्राह्मणाय हितं वृष्णे हितं ॥

**रथखलतिलयवमाषवृषब्रह्मप्राण्यङ्गाद्यः** ॥ २९७ ॥ रथादिभ्यः प्राण्यङ्गवाचिनश्च हिते यो भवति । रथाय हिता रथ्या भूमिः एवं खल्यं तिल्यं यव्यं माष्यं वृष्यं ब्रह्मण्यं दन्त्यं चक्षुष्यम् इत्यादि ॥

**ष्य्योऽजावेः** ॥ २९८ ॥ अजाविभ्यां हिते ष्य्यो भवति । ष इत् अजायै हितः अजथ्यः एवमविथ्यः ॥

**भोगोत्तरपदात्मन्भ्यां खः** ॥ २९९ ॥ भोगोत्तरपदादात्मन्शब्दाच्च हिते खो भवति। मातृभोगाय हितः मातृभोगीणः एवमात्मने हितः आत्मनीनः नश्रुतेरलुक् ॥

**पञ्चसर्वविश्वाज्जनात्कर्मधारयात्** ॥ ३०० ॥ पञ्चादिपूर्वाज्जनान्तात्कर्मधारयात्तद्धिते खो भवति । पञ्चजनेभ्यो हितः पञ्चजनीनः सर्वजनीनः विश्वजनीनः ॥

**सर्वाणो वा** ॥ ३०१ ॥ सर्वशब्दात् हिते णो वा भवति। पक्षे छः सर्वेभ्यो हितः सार्वः-सर्वीयः ॥

**परिणामिनि तदर्थे** ॥ ३०२ ॥ चतुर्थ्यन्तात्तदर्थे परिणामिनि वाच्ये छो भवति । अङ्गारेभ्यः इमानि अङ्गारीयाणि काष्ठानि एवमोदनीयास्तण्डुलाः इत्यादि ॥

**तस्यार्हे कृत्ये वत्** ॥ ३०३ ॥ षष्ठ्यन्तादर्हे कृत्ये वद्भवति । राज्ञोऽर्हं कृत्यं राजवद्वृत्तमस्य । एवं यथावद्विधिवदित्यादि ॥

**सुप इवे** ॥ ३०४ ॥ सुबन्तादिवार्थे सादृश्ये वद्भवति। मुनिरिव मुनिवद्वर्तते देवमिव देववत्पश्यति गुरुं । साधुनेव साधुवदाचर्यते इत्यादि ॥

**भावे त्वतल्** ॥ ३०५ ॥ षष्ठ्यन्ताद्भावे स्वरूपे त्वतलौ भवतः । अभिधानप्रत्ययहेतुः पदार्थधर्मो भावः । ल इत् । स्त्रीलिङ्गार्थः । गोर्भावः गोत्वं गोता शुक्लस्य भावः शुक्लत्वं शुक्लता एवं पाचकत्वं पाचकता देवदत्तत्वं देवदत्तता इत्यादि ॥

**पृथ्वादेर्वेमन्** ॥ ३०६ ॥ पृथ्वादेर्भावे इमन्वा भवति । पक्षे त्वतलौ । प्राप्तश्च भवति ॥

**रः पृथुमृदुकृशभृशदृढपरिवृढस्य** ॥ ३०७ ॥ पृथ्वादेः ऋतो रो भवति णीष्ठेयस्सु इमनि च परतः ॥

**तन्त्याजादेः** ॥ ३०८ ॥ तृप्रत्ययान्तस्यान्त्याजादेश्च लुग् भवति णीष्ठेयस्सु इमनि च परतः । पृथोर्भावः प्रथिमा पृथुत्वं पृथुता पार्थवं । म्रदिमा मृदुत्वं मृदुता मार्दवं ॥

**प्रियस्थिरस्फिरोरुगुरुबहुलतृप्रदीर्घवृन्दारकस्येम्नि च प्रास्थास्फावर्गर्बंहत्रब्द्राघवृन्दं** ॥ ३०९ ॥ प्रियादेर्यथासङ्ख्यं प्रादिर्भवति णीष्ठेयस्सु इमनि च परतः। इति बहुलस्य भावो बंहिमा बहुलत्वं बहुलता बाहुल्यं । प्रियस्य भावः प्रेमा प्रियत्वं प्रियता । उरोर्भावः उरुत्वम् उरुता औरवं वरिमा । गुरोर्भावः गुरुत्वं गुरुता गौरवं गरिमा दीर्घस्य भावः दीर्घत्वं दीर्घता दैर्घ्यं द्राघिमा इत्यादि ॥

**स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्रस्य त्वादेर्लुक्** ॥ ३१० ॥ स्थूलादे-

णोष्ठेयस्सु इमनि च परतो स्त्रादेर्लुग्भवति इक एङ् च । स्थविमा दविमा यविमा ह्रस्वस्य भावो ह्रसिमा ह्रस्वत्वं ह्रस्वता एवं क्षिप्रस्य भावः क्षेपिमा क्षिप्रत्वं क्षिप्रता । क्षुद्रस्य भावः क्षोदिमा क्षुद्रत्वं क्षुद्रता ॥

**वर्णदृढादिभ्यष्ट्यण् च** ॥ ३११ ॥ वर्णवाचिनो दृढादिभ्यश्च भावे इमन् ष्यण् च वा भवतः । टणावितौ शुक्लस्य भावः शुक्लिमा शौक्ल्यं शुक्लत्वं शुक्लता एवं कृष्णिमा कार्ष्ण्यं कृष्णत्वं कृष्णता शितिमा शैत्यं शितिता शितित्वं । दृढस्य भावो द्रढिमा दार्ढ्यं दृढत्वं दृढता एवं परिव्रढिमा पारिवृढ्यं परिवृढत्वं परिवृढता कृशस्य भावः क्रशिमा कार्श्यं कृशत्वं कृशता भृशस्य भावो भ्रशिमा भार्श्यं भृशत्वं भृशता स्थिरस्य भावः स्थेमा स्थैर्यं स्थिरत्वं स्थिरता । इत्यादि ॥

**पतिराजान्तगुणाङ्गराजादिभ्यः कर्मणि च** ॥ ३१२ ॥ पत्यन्ताद्राजान्ताद्गुणाङ्गात् राजादिभ्यश्च भावे कर्मणि च ष्यण् भवति । अधिपतेर्भावः कर्म वा आधिपत्यम् एवं नारपत्यं भौपत्यम् इत्यादि । अधिराजस्य भावः कर्म वा आधिराज्यम् एवं यौवराज्यमित्यादि मूढस्य भावः कर्म वा मौढ्यम् एवं जाड्यं पाण्डित्यमित्यादि राज्ञो भावः कर्म वा राज्यम् अव्य इति निषेधादनो लुग्भवति एवं ब्राह्मण्यं वैदुष्यम् इत्यादि । वाधिकारात्त्वतलौ च । अधिराजत्वम् अधिराजतेत्यादि । टिद्विधानात् स्त्रियामपि । औचिती सामग्री चातुरी वैदग्धी इत्यादि ॥

**सहायाद्वा** ॥ ३१३ ॥ सहायाद्भावे कर्मणि च ष्यण् वा भवति । सहायस्य भावः कर्म वा साहाय्यं साहायकं सहायत्वं सहायता ॥

**वयः प्राणिजातेरञ्** ॥ ३१४ ॥ वयोवाचिनः प्राणिजातिवाचिनश्च भावे कर्मणि चाञ् भवति । कुमारस्य भावः कर्म वा कौमारम् अश्वस्य भावः कर्म वा आश्वम् इत्यादि ॥

**युवादिहायनान्तादण्** ॥ ३१५ ॥ युवादेर्हायनान्ताच्च भावे कृत्ये चाण् । यूनो भावः कृत्यं वा यौवनम् । अणीत्यलुक् । एवं चापलमित्यादि । द्विहायनस्य भावः कृत्यं वा द्वैहायनम् ॥

**लघ्वादेरिकः** ॥ ३१६ ॥ लघ्वक्षरादेरिगन्ताद्भावे कृत्ये चाण् भवति । शुचेर्भावः कृत्यं वा शौचम् । एवं यौवतं लाघवं पाटवं मार्दवमित्यादि वाधिकारात्त्वादि च । शुचित्वं शुचिता ॥

**हृदयपुरुषादसमासे** ॥ ३१७ ॥ हृदयपुरुषाभ्यां भावे कृत्ये चाण् भवति न समासे ॥

**हृदयस्य हृद्याण्लासे** ॥ ३१८ ॥ हृदयस्य हृद्भवति याण्लासेषु परतः । हृदयस्य भावः कृत्यं वा हार्दम् एवं पौरुषम् । असमास इति किं । सहृदयत्वं सत्पुरुषत्वं ॥

**सखिवणिग्दूताद्यः** ॥ ३१९ ॥ सख्यादेर्भावे कृत्ये च यो भवति । सख्युः भावः कृत्यं वा सख्यं । वणिज्या । दूत्यं । त्वतलौ च । सखित्वमित्यादि ॥

**स्तेयार्हन्त्यश्रौत्रम्** ॥ ३२० ॥ एते भावे कृत्ये च निपात्यन्ते । स्तेनस्य भावः कृत्यं वा स्तेयम् । अर्हतः आर्हन्त्यम् आर्हन्ती । श्रोत्रियस्य भावः कृत्यं वा श्रौत्रं । स्तेनत्वमित्यादि ॥

**कपिज्ञातेर्ढण्** ॥ ३२१ ॥ कपिज्ञातिभ्यां भावे कृत्ये च ढण् भवति । कपेर्भावः कृत्यं वा कापेयम् एवं ज्ञातेयं कपित्वमित्यादि ॥

**योपान्त्याद्गुरूपोत्तमाद्वुञ्** ॥ ३२२ ॥ अन्त्यस्य समीपमुपान्त्यम् उत्तमस्तृतीयादिवर्णस्तदनन्तर उपोत्तमः गुरुरुपोत्तमो यस्य तस्माद्यकारोपान्त्याद्भावे कृत्ये च वुञ् भवति । रमणीयस्य भावः कृत्यं वा रामणीयकं पानीयकम् आचार्यकम् औपाध्यायकमित्यादि ॥

**शाकटशाकिनौ चेत्रे** ॥ ३२३ ॥ षष्ठ्यन्तात् क्षेत्रे शाकटशाकिनौ भवतः । इक्षूणां क्षेत्रम् इक्षुशाकटम् इक्षुशाकिनम् । एवं पुष्पशाकटमित्यादि ॥

**धान्येभ्यः खञ्** ॥ ३२४ ॥ धान्यवाचिनः क्षेत्रे खञ् भवति । मुद्गानां क्षेत्रं मौद्गीनम् एवं नैवारीणं तृणधान्यक्षेत्रं कौलत्थीनमित्यादि ॥

**व्रीहिशालेर्ढण्** ॥ ३२५ ॥ व्रीहिशालिभ्यां क्षेत्रे ढण् भवति । व्रीहीणां क्षेत्रं व्रैहेयम् एवं शालेयमित्यादि ॥

**यवयवकषष्टिकाद्यः** ॥ ३२६ ॥ यवादिभ्यः क्षेत्रे यो भवति । यवानां क्षेत्रं यव्यम् एवं यवक्यं षष्टिक्यं ॥

**वाणुमाषात्** ॥ ३२७ ॥ अणुमाषाभ्यां क्षेत्रे यो वा भवति । पक्षे खञ् । अणूनां क्षेत्रम् अणव्यम् आणवीनम् एवं माष्यं माषीणं ॥

**भङ्गोमातिलात्** ॥ ३२८ ॥ भङ्गादिभ्यः क्षेत्रे यो वा भवति । भङ्गानां क्षेत्रं भङ्ग्यं भाङ्गीनम् । एवम् उम्यम् औमीनं तिल्यं तैलीनं ॥

**कुलाज्जल्पे** ॥ ३२९ ॥ कुलात् खञ् भवति जल्पेऽर्थे । कुलस्य जल्पः कौलीनः अपवाद इत्यर्थः ॥

**तुल्ये कस्संज्ञाप्रतिकृत्योः** ॥ ३३० ॥ षष्ठ्यन्तात्तुल्येऽर्थे को भवति संज्ञायां प्रतिकृतौ च विषये । अश्वस्य तुल्यः अश्वकः कस्य चित्संज्ञेयम् अश्वस्य तुल्यम् अश्वकं रूपम् अश्विका प्रतिमा एवं हस्तिकं देवकमित्यादि ॥

**इच्चापुंसोऽनित्क्याप्यसुपः** ॥ ३३१ ॥ अपुल्लिङ्गाद्विहितस्याङः आङ्परे अनित्प्रत्ययावयवे के परे इच्च ह्रस्वश्च वा भवतः न सुपः परस्य । खट्वया तुल्या खट्विका खट्वाका इत्यादि ॥

**शिलाया ढच्च** ॥ ३३२ ॥ शिलाशब्दात्तुल्ये ढञ् ढच्च भवतः । च इत् शिलायास्तुल्यं शैलेयं दधि शिलेयं दधि ॥

**कुशाग्राच्छः** ॥ ३३३ ॥ कुशाग्रशब्दात्तुल्ये छो भवति । कुशाग्रेण तुल्या कुशाग्रीया मतिः ॥

**काकतालीयादयः** ॥ ३३४ ॥ काकतालीयादयस्तुल्ये साधवो वेदितव्याः । काकतालेन तुल्यं काकतालीयम् एवमन्धकवर्तकीयं घुणाक्षरीयम् अजाकृपाणीयम् इत्यादि ॥

**कर्णादिपक्षाज्जाहति मूले** ॥ ३३५ ॥ कर्णादेर्मूले जाहो भवति पक्षात्तिः । कर्णस्य मूलं कर्णजाहं पक्षस्य मूलं पक्षतिः ॥

**शीतोष्णतृप्रादसह आलुः** ॥ ३३६ ॥ शीतादेरसहे आलुर्भवति । शीतस्यासहः शीतालुः एवमुष्णालुः तृप्रालुः ॥

**यथामुखसम्मुखाद्दर्शने खः** ॥ ३३७ ॥ यथामुखसम्मुखाभ्यां दर्शने खो भवति । यथामुखं दर्शनं यथामुखीनम् एवं सम्मुखीनं ॥

**सर्वादेः पथाङ्गकर्मपत्रपात्रशरावाद्व्यापिनि** ॥ ३३८ ॥ सर्वपूर्वात्पथादेर्व्यापिनि खो भवति । सर्वपथस्य व्यापी सर्वपथीनश्वरः एवं सर्वाङ्गीणो ज्वरः सर्वकर्मीणः सर्वपत्रीणः सर्वपात्रीणः सर्वशरावीणः ॥

**आप्रपदम्** ॥ ३३९ ॥ आप्रपदाद्व्यापिनि खो भवति । आप्रपदं व्यापि आप्रपदीनं वस्त्रम् ॥

**अध्वानं यखौ** ॥ ३४० ॥ अध्वनोऽलङ्गामिनि यखौ भवतः । अध्वानमलं गामी अध्वन्यः ॥

**वाशिजिह्वाश्यध्वाथर्वयूनः फिढखठाके** ॥ ३४१ ॥ वाशिनः फिञ्यन्यादेर्लुग् न भवति जिह्वाशिनो ढणि अध्वनः खे अथर्वणष्ठणि यूनोऽके इत्यलुक् अध्वनीनः ॥

**कृत्वाभ्यमित्रम्** ॥ ३४२ ॥ अभ्यमित्रादलं गामिनि यखौ छश्च भवन्ति । अभ्यमित्रमलं गामी अभ्यमित्रीयः अभ्यमित्र्यः अभ्यमित्रीणः ॥

**परोवरीणपरम्परीणपुत्रपौत्रीणसर्वान्नीनायानयीनानुपदीनागवीनाद्यश्वीनाद्यप्रातीनसमांसमीनसाप्तपदीनम्** ॥ ३४३ ॥ एते खान्तास्साधवो वेदितव्याः । परांश्चावरांश्चानुभवन् परोवरीणः परम्परामनुभवन् परम्परीणः पुत्रपौत्राननुभवन् पुत्रपौत्रीणः सर्वमन्नं भुञ्जानः सर्वान्नीनः अयः शारिद्यूते प्रदक्षिणं गमनमनयः प्रसव्यम् अयानयं नीयते अयानयीनः अनुपदं बद्धा अनुपदीना उपानत् आ गोप्रतिदानात्कारी आगवीनः कर्मकरः अद्य श्वो वा भविष्यति अद्यश्वीनम् अद्यप्रातर्वा भविष्यति अद्यप्रातीनं समांसमां प्रसूते समांसमीना गौः सप्तभिः पदैरवाप्यं साप्तपदीनं सख्यं ॥

**तदस्य प्रमाणान्मात्रट्** ॥ ३४४ ॥ प्रथमान्तात्तदस्य प्रमाणमित्यस्मिन्नर्थे मात्रट् भवति । ऊरुः प्रमाणमस्य ऊरुमात्रं जलं स्तनमात्री परिखा दण्डमात्रं क्षेत्रम् इत्यादि ॥

**वोर्ध्वे दघ्नट्द्वयसट्** ॥ ३४५ ॥ ऊर्ध्वप्रमाणवाचिनः तदस्य प्रमाणमित्यस्मिन्नर्थे दघ्नट्द्वयसटौ वा भवतः । जानु प्रमाणमस्य जानुदघ्नं जानुद्वयसं जानुमात्रं जलं तालदघ्नी तालद्वयसी तालमात्री परिखा इत्यादि ॥

**द्विगोः संशये च** ॥ ३४६ ॥ मानाद्द्विगोर्विहितस्य मात्रडादेः प्रत्ययस्य लुग् भवति संशये चासंशये च । द्वौ वितस्ती प्रमाणमस्य द्विवितस्तिः एवं द्विशूर्पं धान्यमित्यादि ॥

**डिन्** ॥ ३४७ ॥ शन्शदन्ताद्विंशतिशब्दाच्च तदस्य प्रमाणमित्यस्मिन्नर्थे डिन् भवति । ड इत् एकादश प्रमाणमेषाम् एकादशिनः श्रावकनिलयाः एवं द्वात्रिंशिनो व्यन्तरेन्द्राः चत्वारिंशिनो भवनेन्द्राः चतुर्विंशिनस्तीर्थकराः ॥

**घत्विदंकिमः** ॥ ३४८ ॥ इदम्किम्शब्दाभ्यां तदस्य मानमित्यस्मिन्नर्थे घतुर्भवति । उदित् उगित्कार्यार्थः घस्य इय् ॥

**किमिदमः कीश्** ॥ ३४९ ॥ किमिदमोः यथासङ्ख्यं घतौ दृग्दृशदृक्षेषु परत कीशौ भवतः । श इत् । एरिति लुक् ततः स्वादयः शेषं प्राग्वत् इदं मानमस्य इयान् प्रासादः इयद्धान्यम् इयती भूमिः किं मानमस्य कियान् पटः कियज्जलं कियती रज्जुः ॥

**एतदो वो घः** ॥ ३५० ॥ एतच्छब्दात्तदस्य मानमित्यस्मिन्नर्थे घतुर्भवति घस्य च वः ॥

**आ घदृग्दृशदृचे** ॥ ३५१ ॥ घतौ दृगादिषु च परतः पूर्वस्याद् भवति । दीर्घः । एतन्मानमस्य एतावान् पटः एतावज्जलमित्यादि ॥

**यत्तदः** ॥ ३५२ ॥ यत्तद्भ्यां मानमित्यत्रार्थे घतुर्भवति घस्य च वः । शेषं प्राग्वत् । यन्मानमस्य यावज्जलं तन्मानमस्य तावदायुः ॥

**किमश्च सङ्ख्याया डतिश्च** ॥ ३५३ ॥ किमो यत्तद्भ्यां च सङ्ख्यामानार्थे डतिर्भवति घतुश्च। ड इत् । अन्त्याजादिलुगर्थः । का सङ्ख्या मानमेषां कति । डतिष्णामिति जश्शसोर्लुक् । एवं यति तति । घतौ कियन्तः । इत्यादि ॥

**अवयवात्तयट्** ॥ ३५४ ॥ अवयवात्योत्सङ्ख्यावाचिनः अस्येत्यर्थे तयड् भवति । ट इत् स्त्रियां ङ्यर्थः द्वाववयवावस्य द्वितयो धर्मः एवं त्रितयो मोक्षमार्गः चतुष्टयी आराधना पञ्चतयं चारित्रं षट्तयं द्रव्यं सप्ततयी ऋद्धिः अष्टतयं कर्म नवतयः पदार्थः इत्यादि ॥

**द्वित्रिभ्यां लुग्वा** ॥ ३५५ ॥ द्वित्रिभ्यां परस्य तयटः तकारस्य लुग्वा भवति । लुच्येरिति लुक् । द्वयः द्वितयः त्रयः त्रितयः ॥

**अधिकमस्मिन् शतसहस्रे तत्सङ्ख्यं शतिशद्दशान्तादड् ॥** ॥ ३५६ ॥ तत्सङ्ख्यात् शतिशद्दशान्तात् सङ्ख्यावाचिनः तदस्मिन्नधिकमित्यस्मिन्नर्थे अड्भवति शते सहस्रे च विषये । विंशतिरधिका अस्मिन्निति विंशं शतं सहस्रं वा । एवं त्रिंशं चत्वारिंशं पञ्चाशम् एकादशं द्वादशमित्यादि ॥

**सङ्ख्यापूरणे डट्** ॥ ३५७ ॥ सङ्ख्यावाचिनः सङ्ख्यापूरणे डट् भवति । डटावितौ एकादशानां पूरणः एकादशो जिनः श्रेयान् एकादशी तिथिः द्वादशः विंशः त्रिंश इत्यादि ॥

**घतोरिथट्** ॥ ३५८ ॥ घत्वन्तात्पूरणे इथड् भवति । ट इत् इयतां पूरणः इयतिथः इयतिथी एवं कियतिथः इत्यादि ॥

**षट्कतिकतिपयात् थट्** ॥ ३५९ ॥ षडादिभ्यः पूरणे थट् भवति षटावितौ षकारः पुंवद्भावार्थः षण्णां पूरणः षष्ठः षष्ठीति निपातनाज्जश्त्वाभावः ष्टुत्वं च एवं कतिथः कतिपयथः ॥

**चतुरः** ॥ ३६० ॥ चतुरः पूरणे थड् भवति । चतुर्णां पूरणः चतुर्थः ॥

**पिति तद्धिते** ॥ ३६१ ॥ पिति तद्धिते परे पूर्वं पुंवद्भवति । चतसृणां पूरणी चतुर्थी । चतुर्थीप्रकृतीति निपातनाद्विसर्जनीयाद्यपवादः ॥

**यछौ चः लुक् च** ॥ ३६२ ॥ चतुरः पूरणे यछौ भवतः चस्य लुक् । चतुर्णां पूरणः तुर्यः तुरीयो वा ॥

**विंशत्यादेस्तमड्वा** ॥ ३६३ ॥ विंशत्यादेः पूरणे तमड् वा भवति । विंशतेः पूरणः विंशतितमः विंशतितमी पक्षे डट् विंशः एवं त्रिंशत्तमः त्रिंशः इत्यादि ॥

**शतादिमासार्धमाससंवत्सरात्** ॥ ३६४ ॥ शतादिभ्यः सङ्ख्यावाचिभ्यः मासादिभ्यश्च पूरणे तमड् भवति । शतस्य पूरणः शततमः एवं सहस्रतमः लक्षतमः मासतमः अर्धमासतमः संवत्सरतमः ॥

**षष्ट्यादेरनादेः** ॥ ३६५ ॥ अपूर्वपदेभ्यः षष्ट्यादिभ्यः पूरणे तमड् भवति। षष्टेः पूरणः षष्टितमः एवं सप्ततितमः अशीतितमः नवतितमः अनादेरिति किं। एकषष्टितमः एकषष्टः इत्यादि ॥

**नो मट्** ॥ ३६६ ॥ नान्तादनादेस्सङ्ख्यावाचिनः पूरणे मड् भवति। ट इत्। पञ्चानां पूरणः पञ्चमः। वलि पदत्वान्नलुक्। एवं सप्तमः अष्टमः नवमः दशमः। स्त्रियां पञ्चमीत्यादि ॥

**द्वित्रेस्तीयट्रेश्च ऋश्** ॥ ३६७ ॥ द्वित्रिभ्यां पूरणे तीयट् भवति त्रिशब्दस्य रेश्च ऋश् भवति। शतावितौ। तकारो डत्प्रत्याहारार्थः द्वयोः पूरणो द्वितीयः तृतीयः ॥

**इष्टादिः** ॥ ३६८ ॥ प्रथमान्तादिष्टादेरनेन पूर्वमित्यस्मिन्नर्थे इन् भवति। इष्टमनेन पूर्वम् इष्टी जिनेन्द्रे। एवमधीती प्रवचने इत्यादि ॥

**श्रोत्रियो वा छन्दोऽध्यायी** ॥ ३६९ ॥ छन्दोऽध्यायी श्रोत्रिय इति वा निपात्यते। श्रोत्रियः छन्दोऽध्यायी पक्षे अण् छान्दसः ॥

**इन्द्रियम्** ॥ ३७० ॥ इन्द्रस्य लिङ्गमिन्द्रियमिति घान्तं साधु वेदितव्यं ॥

**तेन वित्ते चुञ्चुचणौ** ॥ ३७१ ॥ तृतीयान्तात्तेन वित्ते प्रख्याते चुञ्चुचणौ भवतः। विद्यया वित्तः विद्याचुञ्चुः विद्याचणः ॥

**स्वाङ्गेषु सक्ते** ॥ ३७२ ॥ स्वाङ्गवाचिनः तत्र सक्ते को भवति। केशेषु सक्तः केशकः नखक इत्यादि ॥

**उदरे ठणाद्यूने** ॥ ३७३ ॥ उदरशब्दात्तत्र सक्ते ठण् भवति आद्यूने वाच्ये। उदरे सक्तः औदरिकः आद्यून इत्यर्थः ॥

**कर्मठो घटः** ॥ ३७४ ॥ घटश्चेष्टमानः कर्मठ इति निपात्यते ॥

**कमितर्यन्वभ्यभीभ्यः** ॥ ३७५ ॥ अनु अभि अभी इत्येतेभ्यः कमितरि को भवति । अनुकः अभिकः अभीकः ॥

**मुख्यः** ॥ ३७६ ॥ प्रथमान्तात् सोऽस्य मुख्य इत्यस्मिन्नर्थे को भवति । रत्नत्रयं मुख्यमस्य रत्नत्रयकः प्रवचनकः इत्यादि ॥

**उन्मनस्युदुत्सोः** ॥ ३७७ ॥ उद् उत्सु इत्याभ्याम् उन्मनसि को भवति । उत्कः उत्सुकः उन्मनाः ॥

**सञ्जातं तारकादिभ्य इतः** ॥ ३७८ ॥ प्रथमान्तेभ्यः तारकादिभ्यः अस्य सञ्जातमित्यत्रार्थे इतो भवति । तारकाः सञ्जाताः अस्य तारकितं नभः एवं पुष्पितः कोरकितः पुलकितः पल्लवितः कुट्मलितः मुकुलितः अङ्कुरितः फलित इत्यादि ॥

**अस्त्यस्मिन्वेति मतुः** ॥ ३७९ ॥ प्रथमान्तात्तदस्यास्मिन्वास्तीत्यर्थे मतुर्भवति । उदित् । गावोऽस्य सन्ति गोमान् गोमती एवं स्वस्तिमान् मतिमान् तरुमान् इत्यादि ॥ धनमस्यास्तीति विगृह्य मतौ ॥

**मान्तोपान्तजयो मतोर्मो वः** ॥ ३८० ॥ मान्तान्मोपान्तादवर्णान्तादवर्णोपान्ताज्जयन्ताच्च परस्य मतोर्मस्य वो भवति । धनवान् ॥

**स्तं मत्वर्थे** ॥ ३८१ ॥ सान्तं तान्तं च मत्वर्थीये परे पदं न भवति । पदत्वाभावात् नरित्वादि एवं यशस्वान् मरुत्वान् इदंवान् चमूवान् इत्यादि ॥ शोभनो राजा अस्मिन्नस्तीति विगृह्य ॥

**राजन्वान् सुराज्ञि** ॥ ३८२ ॥ सुराज्ञि देशादौ राजन्वानिति निपात्यते । राजन्वान् देशः राजन्वती प्रजा अन्यत्र राजवान् ॥

**नोर्म्यादिभ्यः** ॥ ३८३ ॥ ऊर्म्यादिभ्यः परस्य मतोर्मस्य वो न भवति । ऊर्मिमान् गरुत्मान् इत्यादि ॥

**प्राण्यङ्गादातो लः** ॥ ३८४ ॥ आदन्तात्प्राण्यङ्गान्मत्वर्थे लो भवति । चूडास्यास्तीति चूडालः एवं जङ्घालः जिह्वालः इत्यादि मतुश्च चूडावान् इत्यादि ॥

**सिध्मादिरुक्क्षुद्रजन्तोः** ॥ ३८५ ॥ सिध्मादिभ्यः रोगवाचिभ्यः क्षुद्रजन्तुभ्यश्च मत्वर्थे लो भवति । सिध्मानि सन्त्यस्य सिध्मलः गडुलः मूर्छालः विचर्चिकालः यूकालः मक्षिकालः मतुश्च सिध्मवानित्यादि ॥

**प्रज्ञापर्णोदकफेनाल्लेलौ** ॥ ३८६ ॥ प्रज्ञादिभ्यो मत्वर्थे लेलौ भवतः । प्रज्ञाऽस्यास्तीति प्रज्ञालः प्रज्ञिलः पर्णलः पर्णिलः उदकलः उदकिलः फेनलः फेनिलः मतुश्च प्रज्ञावानित्यादि ॥

**वाचालाटौ** ॥ ३८७ ॥ वाचो मत्वर्थे आलाटौ भवतः क्षेपे मतुश्च । वागस्यास्तीति वाचालः एवं वाचाटः निस्सारं बहुभाषीत्यर्थः ॥

**ग्मिन्** ॥ ३८८ ॥ वाचो मत्वर्थे ग्मिन् भवति । वाग्मी वाग्वान् ॥

**प्रज्ञाश्रद्धार्चावृत्तेर्णः** ॥ ३८९ ॥ प्रज्ञादेर्मत्वर्थे णो भवति । ण इत् प्रज्ञास्यास्तीति प्राज्ञः एवं श्राद्धः आर्चः वार्त्तः मतुश्च प्रज्ञावानित्यादि ॥

**ज्योत्स्नादिभ्योऽण्** ॥ ३९० ॥ ज्योत्स्नादिभ्यो मत्वर्थे अण् भवति । ज्योत्स्ना अस्मिन्नस्ति ज्यौत्स्नः पक्षः एवं तामिस्री रात्रिरित्यादि ॥

**सिकताशर्करात्** ॥ ३९१ ॥ सिकताशर्कराभ्यां मत्वर्थे अण् भवति । सिकताः सन्त्यस्मिन् सैकतम् । एवं शार्करं । मतुश्च सिकतावत् ॥

**इलश्च देशे** ॥ ३९२ ॥ सिकताशर्कराभ्यां मत्वर्थे इलोऽण् च भवतः देशे वाच्ये । सिकताः सन्त्यस्मिन् सिकतिलः सैकतः एवं शर्करिलः शार्करः । मतुश्च ॥

**कच्छ्वा डुरः** ॥ ३९३ ॥ कच्छूशब्दात् मत्वर्थे डुरो भवति । ड इत् । कच्छूरस्यास्तीति । कच्छुरः ॥

**दन्त उन्नतः** ॥ ३९४ ॥ दन्तशब्दादुन्नतोपाधेर्मत्वर्थे डुरो भवति । दन्ता उन्नतास्सन्त्यस्य दन्तुरः ॥

**कृपाहृदयादालुः** ॥ ३९५ ॥ कृपाहृदयाभ्यां मत्वर्थे आलुर्वा भवति । कृपास्त्यस्य कृपालुः कृपावान् हृदयालुः हृदयवान् ॥

**स्वाङ्गाद्धीनादः** ॥ ३९६ ॥ हीनोपाधिकात् स्वाङ्गान्मत्वर्थे अप्रत्ययो भवति । हीना छिन्ना नासिकास्यास्तीति नासिकः । एवं कर्णः अङ्गुलः । इत्यादि ॥

**अभ्रादिभ्यः** ॥ ३९७ ॥ अभ्रादिभ्यः मत्वर्थे अद्भवति । अभ्राण्यस्मिन् सन्तीति अभ्रं नभः एवम् अर्शसः सिध्म इत्यादि ॥

**फलबर्हाच्चेनः** ॥ ३९८ ॥ फलबर्हाभ्यां शृङ्गाच्च मत्वर्थे इनो भवति । फलिनः बर्हिणः शृङ्गिणः ॥

**मलादीमसश्च** ॥ ३९९ ॥ मलान्मत्वर्थे इन ईमसश्च भवतः । मलिनः मलीमसश्च ॥

**ऊर्णाहंशुभमो युस्** ॥ ४०० ॥ ऊर्णादिभ्यो मत्वर्थे युस् भवति । स इत् । ऊर्णायुः अहंयुः शुभंयुः । सिति पदत्वादनुस्वारादि ॥

**तपःस्रग्मायामेधासो विन्** ॥ ४०१ ॥ तपसादेरसन्ताच्च मत्वर्थे विन् भवति । तपोऽस्यास्तीति तपस्वी । एवं स्रग्वी मायावी मेधावी यशस्वी स्रग्वानित्यादि ॥

**तमिस्रार्णवोर्जस्वलोर्जस्विन्नामयाविन्गोमिन्** ॥ ४०२ ॥ एते मत्वर्थे निपात्यन्ते । तमोऽस्या अस्तीति तमिस्रा अर्णांसि सन्त्यस्मिन् अर्णवः ऊर्जो-

ऽस्यास्तीत्यूर्ज्वस्वलः ऊर्जस्वी आमयोऽस्यास्तीति आमयावी गावोऽस्य सन्तीति गोमी ॥

**नौशिखादिभ्यां ठेनौ** ॥ ४०३ ॥ नावादेः शिखादेश्च मत्वर्थे यथासङ्ख्यं ठेनौ भवतः । नौरस्यास्तीति नाविकः एवं कुमारिकः शिखी माली । मतुश्च नौमानित्यादि ॥

**व्रीह्याद्यतोऽनेकाचः** ॥ ४०४ ॥ व्रीह्यादेरदन्ताच्चानेकाचो मत्वर्थे ठेनौ भवतः । व्रीहयः सन्त्यस्य व्रीहिकः व्रीही एवं मायिकः मायी दण्डिकः दण्डी छत्रिकः छत्री । मतुश्च । व्रीहिमानित्यादि ॥

**व्रीहितुन्दादेरिलश्च** ॥ ४०५ ॥ व्रीहिवाचिनः तुन्दादेश्च मत्वर्थे इलष्ठेनौ च भवन्ति । कलमाः सन्त्यस्य कलमिलः कलमिकः कलमी एवं तुन्दिलः तुन्दिकः तुन्दी । उदरिलः उदरिकः उदरी इत्यादि ॥

**गुणादिभ्यो यः** ॥ ४०६ ॥ गुणादिभ्यो मत्वर्थे यो वा भवति । गुणोऽस्यास्तीति गुण्यः गुणी । एवं हिम्यः हिमी इत्यादि ॥ मतुर्निवृत्तः ॥

**वातातिसारपिशाचात् कक्** ॥ ४०७ ॥ वातादेर्मत्वर्थे इन् भवति कक् चैषामागमः । वातोऽस्यास्तीति वातकी एवमतिसारकी पिशाचकी ॥

**सुखादेः** ॥ ४०८ ॥ सुखादेर्मत्वर्थे इन्नेव भवति । सुखमस्यास्तीति सुखी एवं दुःखी इत्यादि ॥

**बाह्वर्वादेर्बलात्** ॥ ४०९ ॥ बाहूरुपूर्वाद् बलशब्दात् मत्वर्थे इन्नेव भवति । बाहुबलमस्यास्तीति बाहुबली एवं ऊरुबली ॥

**हस्तदन्तकराज्जातौ** ॥ ४१० ॥ हस्तादेर्मत्वर्थे इन्नेव भवति जातिनाम्नि वाच्ये । हस्तोऽस्यास्तीति हस्ती एवं दन्ती करी गज इत्यर्थः । अन्यत्र हस्तवान् ॥

**वर्णी ब्रह्मचारी** ॥ ४११ ॥ ब्रह्मचारिण्यर्थे वर्णीति निपात्यते। अन्यत्र वर्णवान् ॥

**प्रकारो जातीयर्** ॥ ४१२ ॥ प्रथमान्तात् सः प्रकारोऽस्यास्तीति अर्थे जातीयर्भवति। र इत्। पटुः प्रकारोऽस्यास्तीति पटुजातीयः एवं मृदुजातीयः यज्जातीयः तज्जातीय इत्यादि ॥

**कोऽण्वादेः** ॥ ४१३ ॥ अण्वादेः सः प्रकारोऽस्येत्यर्थे को भवति। अणुः प्रकारोऽस्य अणुकः एवं स्थूलक इत्यादि ॥

## ॥ अतः परं स्वार्थिकाः प्रत्यया उच्यन्ते ॥

**भूतपूर्वे ष्चरट्** ॥ ४१४ ॥ पूर्वं भूतो भूतपूर्वः तस्मिन् अर्थे वर्त्तमानाच्छब्दरूपात् ष्चरट् प्रत्ययो भवति। षटावितौ। षकारः पुंभावार्थः टकारो ङ्यर्थः। आढ्यो भूतपूर्वः आढ्यचरः एवं नारकचरः देवचरः आढ्या भूतपूर्वी ष्चरटि पिति तद्धिते इति विशेष्यवशात् स्त्रीलिङ्गं पुंवद्भवति। आढ्यचरी ॥

**व्याश्रये तस्** ॥ ४१५ ॥ नानापक्षाश्रयो व्याश्रयः तस्मिन् अर्थे वर्तमानात्तस् भवति। रामतो वानरध्वजाः रावणतो दानवाः एवं चैत्रतो मैत्रः इत्यादि ॥

**पर्यभेः सर्वोभये** ॥ ४१६ ॥ पर्यभिभ्यां यथासङ्ख्यं सर्वोभयार्थयोः तस् भवति। परितः सर्वतः। अभितः उभयतः ॥

**आद्यादिभ्यः** ॥ ४१७ ॥ आद्यादिभ्यो यथासम्भवं तस् भवति। आदावादितः एवमन्ततः मध्यतः पृष्ठेन पृष्ठतः एवं मुखतः पार्श्वतः शब्दतः अर्थतः पाठत इत्यादि ॥

**अहीयरुहोऽपाये** ॥ ४१८ ॥ हीयरुहवर्जितस्य धातोरपाये विहिता या पञ्चमी तदन्तात्तस् भवति। ग्रामात् ग्रामतः आगच्छति एवं धर्मतोऽपैति

मूलतो नष्ट इत्यादि। अहीयरुह इति किं तस्माद्धीयते बीजाद्रोहत्यङ्कुरः वृक्षादवरोहति ॥

**अद्व्यादिवैपुल्यात्सर्वादिकिंबह्वोः तस्** ॥ ४१९ ॥ अद्व्यादेः सर्वादेः किमः अवैपुल्यार्थाच्च बह्वोः पञ्चम्यन्तात् तस् भवति। प इत्। सर्वस्मात् सर्वतः एवं विश्वतः उभयतः यतः ततः अत्त्वाल्लुचौ बहुतः अद्व्यादीति किं द्वाभ्यां युष्मत् अस्मत् ॥

**इतोऽतःकुतः** ॥ ४२० ॥ एते तसन्ता निपात्यन्ते। अस्मात् इतः एतस्मात् अतः कस्मात् कुतः ॥

**सप्तम्याः** ॥ ४२१ ॥ सप्तम्यन्तादद्व्यादेः सर्वादेः किमः अवैपुल्यार्थाच्च बह्वोः त्रप् भवति। प इत्। सर्वस्मिन् सर्वत्र एवं विश्वत्र उभयत्र यत्र तत्र अमुत्र एकत्र बहुत्र ॥

**क्वकुत्रात्रेह** ॥ ४२२ ॥ एते त्रबन्ता निपात्यन्ते। कस्मिन् क्व कुत्र एतस्मिन् अस्मिन् वा अत्र इह ॥

**किंयत्तत्सर्वैकान्यात्काले दा** ॥ ४२३ ॥ काले वर्त्तमानात् किमादेः सप्तम्यन्ताद्दा भवति। कस्मिन् काले कदा। एवं यदा तदा सर्वदा एकदा अन्यदा ॥

**सदैतर्ह्यधुनेदानींतदानींसद्यः** ॥ ४२४ ॥ एते काले निपात्यन्ते। सर्वस्मिन् काले सदा। एतस्मिन् काले एतर्हि अस्मिन् काले अधुना इदानीं। तस्मिन् काले तदानीं। समाने काले सद्यः। अस्मिन् काले अद्येति। श्राद्धमद्येति निपातनात् सिद्धं ॥

**परेद्यव्यह्नि** ॥ ४२५ ॥ अह्नि वाच्ये परेद्यवीति निपात्यते। परस्मिन् अह्नि परेद्यवि ॥

**पूर्वापराधरोत्तरान्यान्यतरेतरादेद्युस्** ॥ ४२६ ॥ अह्नि वर्तमाना-त्पूर्वादेः सप्तम्यन्तादेद्युस् भवति । पूर्वस्मिन् अह्नि पूर्वेद्युः एवमपरेद्युः अधरेद्युः उत्तरेद्युः अन्येद्युः अन्यतरेद्युः इतरेद्युः ॥

**उभयाद्युश्च** ॥ ४२७ ॥ सप्तम्यन्तादुभयशब्दादह्नि द्युस् एद्युस् च भवतः । उभयस्मिन् अह्नि उभयद्युः उभयेद्युः ॥

**परुत्परार्यैषमो वर्षे** ॥ ४२८ ॥ एते वर्षे संवत्सरे निपात्यन्ते । पूर्व-स्मिन् वर्षे परुत पूर्वतरस्मिन् वर्षे परारि अस्मिन् वर्षे ऐषमः ॥

**अनद्यतने र्हिः** ॥ ४२९ ॥ अद्व्यादिसर्वादेः किमः अवैपुल्यार्थाच्च बहोः अनद्यतने काले र्हिर्भवति । यस्मिन्ननद्यतने काले यर्हि एवं तर्हि अमुर्हि कर्हि अन्यर्हि इत्यादि ॥

**प्रकारे था** ॥ ४३० ॥ अद्व्यादिसर्वादेः किमः अवैपुल्यार्थाच्च बहोः प्रकारे था भवति । सर्वैः प्रकारैः सर्वथा येन प्रकारेण यथा एवं तथा अमुथा अन्यथा इत्यादि ॥

**कथमित्थमु** ॥ ४३१ ॥ एतौ प्रकारे निपात्येते । उदित् तसुप्रत्या-हारार्थः । केन प्रकारेण कथम् अनेन प्रकारेण इत्थं ॥

**सङ्ख्याया धा** ॥ ४३२ ॥ सङ्ख्यावाचिनः प्रकारे धा भवति । एकेन प्रकारेण एकधा एवं द्विधा त्रिधा षोढा दशधा शतधा इत्यादि ॥

**बद्वति सङ्ख्या** ॥ ४३३ ॥ वतुडत्यन्तं सङ्ख्यावद्भवति । यावद्भिः प्रकारैः यावद्धा एवं तावद्धा इयद्धा कियद्धा एतावद्धा कतिभिः प्रकारैः कतिधा एवं यतिधा ततिधा ॥

**बहुगणं भेदे** ॥ ४३४ ॥ बहुगणशब्दो भेदे नानात्वे सङ्ख्यावद्भवति । बहुभिः प्रकारैः बहुधा एवं गणधा ॥

**वैकाञ्ज्यम्** ॥ ४३५ ॥ एकशब्दात् प्रकारे ञ्ध्यं वा भवति । ञ इत् ऐकध्यम् । एकधा ॥

**द्वित्रेर्ञ्धमेधौ** ॥ ४३६ ॥ द्वित्रिभ्यां प्रकारे ञ्धम् एधा इत्येतौ वा भवतः । ञ इत् । द्वैधं द्वेधा द्विधा त्रैधं त्रेधा त्रिधा ॥

**तद्वति धण्** ॥ ४३७ ॥ द्वित्रिभ्यां प्रकारवति धण् भवति । ण इत् । अवणिति प्रतिषेधान्नाव्ययत्वं द्वौ प्रकारावेषां द्वैधानि एवं त्रैधानि कुलानि ॥

**वारे कृत्वस्** ॥ ४३८ ॥ वारे आवृत्तिकाले वर्तमानात्सङ्ख्यावाचिनः कृत्वस् भवति । पञ्च वारान् पञ्चकृत्वः एवं दशकृत्वः शतकृत्वः इत्यादि ॥

**चतुस्त्रिद्वेस्सुच्** ॥ ४३९ ॥ एतेभ्यो वारे सुच् भवति । उच्चावितौ । चतुरो वारान् चतुष्करोति पदस्येति लुक् एवं त्रिः द्विः ॥

**सकृत्** ॥ ४४० ॥ एकशब्दस्य वारे सकृदिति निपात्यते । सकृदेकवारं ॥

**परावरात्स्तात्** ॥ ४४१ ॥ दिग्देशकालेषु वर्तमानाभ्यां प्रथमापञ्चमी-सप्तम्यन्ताभ्यां परावराभ्यां स्ताद् भवति । परा दिक् परो देशः परः कालो वा परस्तात् एवं पञ्चमीसप्तम्यन्तयोरपि परस्तादवरस्तात् आगच्छतीत्यादि-क्रियाभिः सम्बन्धः ॥

**पश्चोऽपरस्य दिगादेश्चाति** ॥ ४४२ ॥ दिग्देशकालेषु वर्तमानादप-रशब्दादाद्भवति आति पश्चादेशश्च । पश्चाद्रमणीयं पश्चादागत इत्यादि ॥

**वोत्तरपदेऽर्धे** ॥ ४४३ ॥ अपरशब्दस्य अर्धशब्दे उत्तरपदे पश्चादे-शो वा भवति । अपरमर्धं पश्चार्धम् अपरार्धं वा ॥

**पुरःपुरस्तादवोऽवस्तादधोऽधस्तादुपर्युपरिष्टात्** ॥ ४४४ ॥ पुरसादयः शब्दाः दिग्देशकालेषु साधवो वेदितव्याः । पुरः पुरस्तात् अवः

अवस्तात् अधः अधस्तात् उपरि उपरिष्टात् रमणीयमित्यादि तकारस्तत्तेति प्रत्याहारार्थः ॥

**एनोऽदूरे** ॥ ४४५ ॥ अदूरे दिग्देशकाले वर्तमानाद्दिग्वाचिनः एनो भवति । पूर्वेण ग्रामं दक्षिणेन राजगृहम् उत्तरेण ग्राममित्यादि ॥

**लुगञ्चेः** ॥ ४४६ ॥ अञ्चत्यन्ताद्दिग्वाचिनः परस्यैनस्य लुग् भवति । प्राग्ग्रामात् उदग्ग्रामात् इत्यादि ॥

**तीयशम्बबीजात् कृषौ कृञा डाच्** ॥ ४४७ ॥ कृञा योगे तीयप्रत्ययान्तात् शम्बबीजाभ्यां च डाच् भवति कृषावर्थे । डचावितौ । द्वितीयाकरोति क्षेत्रं द्वितीयं वारं कृषतीत्यर्थः एवं तृतीयाकरोति शम्बाकरोति तिर्यक् कृषतीत्यर्थः बीजाकरोति उप्त्वा कृषतीत्यर्थः ॥

**सङ्ख्यादेर्गुणात्** ॥ ४४८ ॥ सङ्ख्यापूर्वाद्गुणात् कृञा योगे डाच् भवति कृषावर्थे । द्विगुणाकरोति त्रिगुणाकरोति क्षेत्रं ॥

**सपत्ननिष्पत्रादतिपीडने** ॥ ४४९ ॥ सपत्रनिष्पत्राभ्यां कृञा योगे डाच् भवत्यतिपीडने । सपत्राकरोति निष्पत्राकरोति मृगम् अतिपीडयतीत्यर्थः ॥

**मद्रभद्रान्मुण्डने** ॥ ४५० ॥ मद्रभद्राभ्यां कृञा योगे डाच् भवति मुण्डने । मद्राकरोति भद्राकरोति मुण्डयतीत्यर्थः ॥

**प्रियसुखादानुकूल्ये** ॥ ४५१ ॥ प्रियसुखाभ्यां कृञा योगे डाच् भवति आनुकूल्ये । प्रियाकरोति सुखाकरोति अनुकूलयतीत्यर्थः ॥

**दुःखनिष्कुलशूलसमयसत्यात्प्रातिकूल्यनिष्कोषपाकयापनाशपथे** ॥ ४५२ ॥ कृञा योगे दुःखात् प्रातिकूल्ये निष्कुलान्निष्कोषे शूलात्पाके समयाद्यापनायां सत्यात् अशपथे डाच् भवति । दुःखाकरोति प्रातिकूल्यं

करोतीत्यर्थः निष्कुलाकरोति दाडिमं निष्कुष्णातीत्यर्थः । शूलाकरोति मांसं पचतीत्यर्थः समयाकरोति तन्तुवायः कालं यापयतीत्यर्थः सत्याकरोति वणिक् सत्यंकारं करोतीत्यर्थः ॥

**कर्मकर्तृभ्यां प्रागतत्तत्त्वे च्विः** ॥ ४५३ ॥ कृञः कर्मणः कृञा योगे भवतेः कर्तुश्च ताभ्यां योगे च्विर्भवति प्रागतस्य तद्भावे गम्यमाने । स सर्व इत् ॥

**च्वौ चास्यानव्ययस्येः** ॥ ४५४ ॥ अवर्णस्य च्वौ क्यच्चि च परे ईद्भवति नाव्ययस्य । अशुक्लं शुक्लं करोति शुक्लीकरोति अशुक्लः शुक्लो भवति शुक्लीभवति एवं शुक्लीस्यात् मालीकरोति मालीभवति मालीस्यात् ॥

**यङ्लेङ्कृति चर्ङ्चो रीदीर्घौ** ॥ ४५५ ॥ यङि ये च्वौ च प्रत्यये परे पूर्वस्य ऋतो री भवत्यचो दीर्घः न लेङ्कृतोः । अमुनिं मुनिं करोति मुनीकरोति मुनीभवति मुनीस्यात् गुरूकरोति पित्रीकरोति पित्रीभवतीत्यादि ॥

**अनेकाचोऽव्यक्तानुकरणात् कृभ्वस्तिभ्यां डिश्च** ॥ ४५६ ॥ अव्यक्तवर्णस्यानुकरणादनेकाचः कृञा भूअस्तिभ्यां च धातुभ्यां योगे डाच् भवति वा द्विश्च । पटत्करोति पटपटाकरोति पटपटाभवति पटपटास्यात् ॥

**चेतोमनोरहोरजोऽरुश्चक्षुषो लुक्च्वौ** ॥ ४५७ ॥ चेतस् इत्यादीनां लुग् भवति च्वौ परे । चेतीकरोति चेतीभवति चेतीस्यात् मनीकरोति रजीकरोति रहीकरोति अरूकरोति चक्षूकरोतीत्यादि । तदन्तस्यापि लुग्भवत्येव । सुचेतीकरोति समनीकरोति विरहीकरोति नीरजीकरोति सारूकरोति सचक्षूकरोतीत्यादि ॥

**इसुसोर्वहुलं** ॥ ४५८ ॥ लुग्भवति च्वौ परे । सर्पीभवति सर्पिर्भवति धनूभवति धनुर्भवति इत्यादि ॥

**ईग् हलः** ॥ ४५९ ॥ हलन्तस्य बहुलमीक् भवति च्वौ परे । क इत् । दृषदीभवति दृषद्भवतीत्यादि ॥

**व्याप्तौ सात्** ॥ ४६० ॥ कृभ्वस्तिभिर्योगे कर्मकर्तृभ्यां प्रागतत्तत्त्वे विषये साद्भवति व्याप्तौ सामस्त्ये गम्यमाने । अभस्म समस्तं भस्म करोति भस्मसात्करोति भस्मसाद्भवति भस्मसात्स्यादित्यादि एवमग्निसात्करोति । अत्रा-सक्सात इति निषेधान्नषित्वं ॥

**जातेः सम्पदा च** ॥ ४६१ ॥ कृआदिभिस्सम्पदा च योगे जातिवाचिभ्यां कर्मकर्तृभ्यां प्रागतत्तत्त्वे साद्भवति व्याप्तौ । अग्निसात्करोति सर्वं शस्त्रं सेनायां दैवम् । अग्निसात्सम्पद्यते दैवात् ॥

**तत्राधीने** ॥ ४६२ ॥ कृआदिभिः सम्पदा च योगे सप्तम्यन्तादधीने आयत्ते साद् भवति । आत्मन्यधीनं करोति आत्मसात्करोति आत्मसाद्-भवति आत्मसात्स्यात् आत्मसात्सम्पद्यते ॥

**बह्वल्पार्थात्कारकाच्छसीष्टानिष्टे** ॥ ४६३ ॥ बह्वर्थादल्पा-र्थाच्च कारकाद्यथासङ्ख्यमिष्टानिष्टयोरर्थयोः शसिर्भवति । इदित् । तसि-प्रत्याहारार्थः । बहुशः गणशः भूरिशः भोजयति अल्पशः स्तोकशः ददा-तीत्यादि ॥

**सङ्ख्यैकाद्वीप्सायां** ॥ ४६४ ॥ सङ्ख्यावाचिनः एकार्थवाचिनश्च वीप्सायां विषये शसिर्भवति । एकमेकम् एकशः । द्वौद्वौ द्विशः एवं त्रिशः दशशः शतशः यावच्छः कतिशः गणशः एकार्थात् वृक्षशः जनशः क्रमशः सङ्ख्यैकादिति किं जनोजनो इत्यादि ॥

**प्रकृते मयट्** ॥ ४६५ ॥ प्रकृते प्रस्तुते प्रचुरे वार्थे मयड् भवति । प्रकृत-मन्नमन्नमयम् एवं दानमयं रणमयम् इत्यादि ॥

**अस्मिन्** ॥ ४६६ ॥ प्रथमान्तात्तदस्मिन् प्रकृतमित्यर्थे मयड् भवति । अपूपाः प्रकृता अस्मिन् अपूपमयं भोजनम् एवं घृतमयं क्षमामयो धर्म इत्यादि ॥

**निन्द्ये पाशप्** ॥ ४६७ ॥ निन्द्येऽर्थे वर्तमानात् पाशप् भवति । प इत् निन्द्यो वैयाकरणः वैयाकरणपाशः । एवं मुनिपाशः तार्किकपाशः जायपाशा पित्वात् पुंवद्भावः इत्यादि ॥

**तिङश्च प्रकृष्टे तमप्** ॥ ४६८ ॥ प्रकृष्टे वर्तमानात्सुबन्तात्तिङन्ताच्च तमप् भवति । प इत् पुम्भावार्थः सर्वे इमे शुक्लाः अयमेषां प्रकृष्टः शुक्लः शुक्लतमः एवम् आढ्यतमः गोतमा । तिङन्तमपि ॥

**अव्ययैत्किंतिङोऽसत्त्वे तयोर्डाम्** ॥ ४६९ ॥ अव्ययादेदन्तात् किमस्तिङन्ताच्च परयोस्तमप्तरपोर्डाम् भवति स्वार्थे न चेत्तौ सत्त्वे द्रव्ये प्रकृष्टे वर्तेते । डित्त्वादन्त्यादेशः । सर्वे इमे पचन्ति अयमेषां प्रकृष्टं पचति पचतितमाम् एवं पठतितमाम् उच्चैस्तमां प्राह्णेतमां किंतमां ॥

**द्वयोर्विभज्ये च तरप्** ॥ ४७० ॥ द्वयोर्मध्ये प्रकृष्टे विभज्ये विकल्प्ये चार्थे वर्तमानात्सुबन्तात्तिङन्ताच्च तरप् भवति । प इत् । इमौ शुक्लौ अयमनयोः प्रकृष्टः शुक्लः शुक्लतरः एवमाढ्यतरः । इमौ पचतः । अयमनयोः प्रकृष्टं पचति पचतितराम् एवं पठतितमां सुतरां प्राह्णेतरां किंतरां । स्रौघ्नेभ्यो माथुराः पटुतराः ॥

**गुणाङ्गाद्वेष्ठेयसू** ॥ ४७१ ॥ गुणाङ्गात् द्रव्यवाचिनः परयोस्तमप्तरपोर्यथासङ्ख्यम् इष्ठ ईयसु इत्येतौ वा भवतः । उदित् नमाद्यर्थः । अयमेषां प्रकृष्टः पटुरिति विगृह्य तमविष्ठे अन्त्याजादिलुक् । पटिष्ठः पटुतमो वा अयमनयोः प्रकृष्टः पटुः पटीयान् पटुतरो वा । एवं प्रेष्ठः स्थेष्ठः स्थेयान् । वरिष्ठः वरीयान् । गरिष्ठः गरीयान् । बंहिष्ठः बंहीयान् त्रपिष्ठः त्रपीयान् द्राघिष्ठः द्राघीयान् वृन्दिष्ठः वृन्दीयान् प्रथिष्ठः प्रथीयान् म्रदिष्ठः म्रदीयान् क्रशिष्ठः क्रशीयान् भ्रशिष्ठः भ्रशीयान् । द्रढिष्ठः द्रढीयान् । परिव्रढिष्ठः परिव्रढीयान् स्थविष्ठः स्थवीयान् । दविष्ठः दवीयान् यविष्ठः यवीयान् ह्रसिष्ठः ह्रसीयान् । क्षेपिष्ठः क्षेपीयान् क्षोदिष्ठः क्षोदीयान् ॥

**विन्मतोः स्रुग्णीष्ठेयसि** ॥ ४७२ ॥ विन्मत्वोः श्लुग् भवति णीष्ठेयस्सु परतः । अयमेषां प्रकृष्टः तपस्वी । तपिष्ठः तपीयान् अन्त्याजादिलुक् एवं धनिष्ठः धनीयानित्यादि ॥

**कन्वाऽल्पयूनोः** ॥ ४७३ ॥ अल्पयुवन्शब्दयोः णीष्ठेयस्सु परतः कन्वा भवति ॥

**नैकाचः** ॥ ४७४ ॥ एकाचः णीष्ठेयस्सु इमनि च परतः अन्त्याजादेर्लुग्न भवति । कनिष्ठः कनीयान् पक्षे अल्पिष्ठः अल्पीयान् यविष्ठः यवीयान् ॥

**प्रशस्यस्य श्रः** ॥ ४७५ ॥ प्रशस्यशब्दस्य णीष्ठेयस्सु परतः श्रो भवति । श्रेष्ठः श्रेयान् ॥

**वृद्धस्य च ज्यः** ॥ ४७६ ॥ वृद्धशब्दस्य प्रशस्यशब्दस्य च णीष्ठेयस्सु परतः ज्यो भवति । ज्येष्ठः ॥

**ज्यायान्** ॥ ४७७ ॥ ईयसि ज्यायानिति निपात्यते ॥

**वर्षः** ॥ ४७८ ॥ वृद्धशब्दस्य णीष्ठेयस्सु परतः वर्षो भवति । वर्षिष्ठः वर्षीयान् ॥

**बाढान्तिकयोः साधनेदौ** ॥ ४७९ ॥ बाढान्तिकयोः णीष्ठेयस्सु परतः यथासङ्ख्यं साधनेदौ भवतः । साधिष्ठः साधीयान् नेदिष्ठः नेदीयान् ॥

**बहोर्णीष्ठे भूय्** ॥ ४८० ॥ बहोर्णीष्ठयोः भूय् भवति । भूयिष्ठः ॥

**भूर्लुक्चेः** ॥ ४८१ ॥ बहोरीयसाविमनि च भूर्भवति इवर्णस्य लुक् च भूयान् ॥

**प्रशस्ते रूपप्** ॥ ४८२ ॥ प्रशस्ते वर्तमानाद्रूपप् भवति । प्रशस्तो धर्मः धर्मरूपः एवमातरूपः आगमरूपः प्रशस्तं पचति पचतिरूपमित्यादि ॥

**ईषदसमाप्तेऽङादेः कल्पब्देश्यब्देशीयर्** ॥ ४८३ ॥ ईषदसमाप्तेऽर्थे वर्तमानात्तिङन्तात्सुबन्ताच्च कल्पब्देश्यब्देशीयर्प्रत्यया भवन्ति न ङादेः। पराविती पुम्भावार्थौ ईषदसमाप्तं पचति पचतिकल्पं पचतिदेश्यं पचतिदेशीयम् ईषदसमाप्तो राजा राजकल्पः राजदेश्यः राजदेशीयः एवं गणधरकल्प इत्यादि स्त्रियाम् ईषदसमाप्ता राज्ञी राजकल्पेत्यादि अङादेरिति किम् तमादिभ्यो न भवन्ति तौ ङ इति तरतमपोर्ङसंज्ञा ॥

**सुपः प्राग्बहुर्वा** ॥ ४८४ ॥ ईषदसमाप्ते वर्तमानात् सुबन्तात् प्राक् बहुप्रत्ययो वा भवति । ईषदसमाप्तो राजा बहुराजा बहुधीर इत्यादि ॥

**तिङ्सर्वादेरच्वन्त्यात्पूर्वोऽक्** ॥ ४८५ ॥ कुत्सिताद्यर्थे वर्तमानस्य तिङन्तस्य सर्वादेश्चाक्षु अन्त्यादचः पूर्वोऽक्प्रत्ययो भवति । कुत्सितमज्ञातमल्पं वा पचति पचतकि एवं पठतकि सर्वके यके तके इत्यादि स्त्रियामयदादीति निषेधान्नेत् । यका सका इत्यादि ॥

**वाकोऽस्थोः** ॥ ४८६ ॥ अदसोऽकोऽतः सौ उद्वा भवति। उत्यनोरिति निषेधान्नेत् असुकः असुका असकौ ॥

**द्व्येषसूतपुत्रवृन्दारस्य** ॥ ४८७ ॥ द्व्यादीनामन्त्यस्य अनिति आङ्परे के परे इद्वा भवति । द्विके द्वके एषिका एषका ॥

**प्राकात्कप्** ॥ ४८८ ॥ कप्रत्ययात्प्राक् येऽर्था वक्ष्यन्ते तेषु कप् भवति । प इत् । अधिकारोऽयं ॥

**युष्मदस्मदोस्सुपोऽसोभि** ॥ ४८९ ॥ सुबन्तयोर्युष्मदस्मदोरक्ष्वन्त्यात् पूर्वोऽक् भवति कुत्सिताद्यर्थे न सादौ ओदादौ भादौ च सुपि । त्वयका मयका युष्माककम् अस्माककम् । असोभीति किं युष्मकासु अस्मकासु युवकयोः आवकयोः युवकाभ्याम् आवकाभ्यां ॥

**कौदिश्वाव्ययस्य** ४९० ॥ कुत्सिताद्यर्थे अव्ययस्याक्षवन्त्यात् पूर्वोऽक्-प्रत्ययो भवति कान्तस्य तु दिश्वादेशः । कुत्सितमल्पमज्ञातं वा । उच्चैः उच्चकैः एवं नीचकैः शनकैः । कान्तस्य । धकित् पृथकदित्यादि ॥

**तूष्णीकां** ॥ ४९१ ॥ कुत्सिताद्यर्थे अकि तूष्णीकामिति निपात्यते ॥

**स्वज्ञाजभस्त्राधातुक्यः** ॥ ४९२ ॥ स्वादीनां कयान्तस्य चान्त्यस्य अनि-त्याङ्परे के परे स्त्रियामिद्वा भवति न धातोः । कुत्सिता स्वा स्विका स्वका ज्ञिका ज्ञका अजिका अजका भस्त्रिका भस्त्रका चटकिका चटकका आर्यिका आर्यका इदभावे पुंवद्भावः ॥

**कुत्सिताल्पाज्ञाते** ॥ ४९३ ॥ कुत्सिताल्पाज्ञातेषु वर्तमानाद्यथायोगं कबादयो भवन्ति । कुत्सितः अल्पः अज्ञातो वा देवः देवकः एवं धर्मकः अश्वकः नरक इत्यादि स्त्रियां सूतिका सूतका वृन्दारिका वृन्दारका नरिका ॥

**अनुकम्पातन्नीत्योः** ॥ ४९४ ॥ अनुकम्पायां तन्नीतौ च अनुकम्पायुक्ते सान्त्वने च वर्तमनाद्यथायोगं कबादयो भवन्ति । अनुकम्पितः पुत्रः पुत्रकः सान्त्वितो वा एवं वत्सकः देवक इत्यादि स्त्रियां पुत्रिका पुत्रका ॥

**ऋच्युत्तरपदस्य ष्कन्** ॥ ४९५ ॥ बह्वचो नृनाम्न उत्तरपदस्य श्रुचि अनुकम्पायां ष्कन् भवति । पनावितौ । अनुकम्पितो देवदत्तः देवकः एवं जिनकः । स्त्रियां नित्यान्तेत् । देवका जिनका इत्यादि ॥

**ह्रस्वे** ॥ ४९६ ॥ ह्रस्वेऽर्थे यथायोगं कबादयो भवन्ति । ह्रस्वोऽश्वः अश्वकः इत्यादि ॥

**यत्तत्किमन्याद्द्वयोर्निर्धार्ये डतरः** ॥ ४९७ ॥ द्वयोर्मध्ये निर्धार्ये वर्तमानेभ्यो यत्तत्किमन्येभ्यो डतरो भवति । ड इत् । अन्त्याजादिलुगर्थः । यतरो भवतोश्चैत्रस्ततर आगच्छतु । कतरः पटुः अन्यतरो गच्छतु ॥

**वैकात्** ॥ ४९८ ॥ द्वयोर्निर्धार्ये वर्तमानादेकशब्दाड्डतरो वा भवति । द्वयोरेकतरः एकको वा ॥

**बहूनां प्रश्ने डतमश्च** ॥ ४९९ ॥ बहूनां मध्ये निर्धार्ये प्रश्ने च वर्तमानेभ्यो यत्तत्किमन्यैकेभ्यो डतरो डतमश्च वा भवतः नैकशब्दाड्डतरः । ड इत् यतरो यतमो वा भवतां पटुः ततरस्ततमो वा आगच्छतु । अन्यतरोऽन्यतमो वागच्छतु । कतरः कतमो वा देवदत्तः एकतमः पटुः ॥

**कुमारीक्रीडनेयोऽस्यादिभ्यः** ॥ ५०० ॥ कुमारीक्रीडनात् ईयसन्तात् अस्यादिभ्यश्च स्वार्थे को वा भवति । कन्दुरेव कन्दुकः एवं गोलकः श्रेयानेव श्रेयस्कः एवं गरीयस्कः अविरेव अविकः यावकः इत्यादि ॥

**तारकावर्णका ज्योतिस्तान्तवे** ॥ ५०१ ॥ ज्योतिषि तारकेति तान्तवे वर्णकेति निपात्यते ॥

**तीयाट्टीकणविद्यायां** ॥ ५०२ ॥ तीयप्रत्ययान्तात् स्वार्थे टीकण् वा भवति न विद्यायां । द्वितीयमेव द्वैतीयीकं तार्तीयीकम् अविद्यायामिति किं । द्वितीया तृतीया विद्या ॥

**ञोऽष्टमाद्भागे** ॥ ५०३ ॥ अष्टमात् स्वार्थे ञो वा भवति भागे वाच्ये । अष्टम एव आष्टमो भागः अष्टमो वा ॥

**षष्ठात्** ॥ ५०४ ॥ षष्ठात् स्वार्थे ञो वा भवति भागे वाच्ये । षष्ठ एव षाष्ठो भागः षष्ठो वा ॥

**एकादाकिंश्चासहाये** ॥ ५०५ ॥ असहाये वर्तमानादेकशब्दादाकिन् कश्च वा भवतः । एक एव एकाकी एककः ॥

**मृदस्तिकः** ॥ ५०६ ॥ मृदः स्वार्थे तिको भवति । मृदेव मृत्तिका ॥

**स्नौ प्रशस्ते** ॥ ९०७ ॥ प्रशस्ते मृदः स्नौ भवतः । प्रशस्ता मृत् मृत्सा मृत्स्ना ॥

**बहुलं घतोर्द्वयसड्मात्रट्** ॥ ९०८ ॥ घवन्तात् स्वार्थे द्वयसट् मात्रट् बहुलं भवतः । टावितौ । यावदेव यावद्द्वयसं यावन्मात्रम् । एवं तावद्द्वयसं तावन्मात्रम् इत्यादि ॥

**वर्णात् कारः** ॥ ९०९ ॥ वर्णवाचिनः स्वार्थे कारो भवति । अ एव अकारः एवं ककारः वकारः चकारः स्यात्कार इत्यादि ॥

**भेषजादिहोत्रादेवेभ्यष्ष्यण्छतल्** ॥ ९१० ॥ भेषजादिभ्यः स्वार्थे ष्यण् भवति होत्रायाः छः देवात्तल् । भेषजमेव भैषज्यम् एवमैतिह्यं चातुर्वर्ण्यं त्रैलोक्यं त्रैकाल्यं षाड्गुण्यं चातुर्मास्यं शैल्यं स्त्रियां शैलीत्यादि । होत्रैव होत्रीयं देव एव देवता ॥

**नामरूपभागाद्धेयं** ॥ ९११ ॥ नामादिभ्यः स्वार्थे धेयो भवति । नामैव नामधेयं रूपधेयं भागधेयं ॥

**मर्तादिभ्यो यः** ॥ ९१२ ॥ मर्तादिभ्यः स्वार्थे यो भवति । मर्त एव मर्त्यः । सूर एव सूर्यः । क्षेम एव क्षेम्यः । भाग एव भाग्यमित्यादि ॥

**नवात्नतनखं च नू च** ॥ ९१३ ॥ नवशब्दात् स्वार्थे नतनखा यश्च वा भवन्ति तस्य नू इत्यादेशश्च । नवमेव नूत्नं नूतनं नवीनं नव्यं ॥

**प्रात्पुराणे** ॥ ९१४ ॥ पुराणेऽर्थे वर्तमानात् प्रात् नतनखा भवन्ति । प्रत्नं प्रतनं प्रीणं । पुराणमित्यर्थः ॥

**प्रज्ञादिभ्योऽण्** ॥ ९१५ ॥ प्रज्ञादिभ्यः स्वार्थे अण् वा भवति । प्रज्ञ एव प्राज्ञः वणिगेव वाणिजः । अन्त एव आन्तः कर्मैव कार्मणमित्यादि ॥

**वाचष्ठण्** ॥ ९१६ ॥ वाचः सन्दिष्टेऽर्थे ठण् भवति । सन्दिष्टा वाक् वाचिकं ॥

**विनयादिभ्यः** ॥ ९१७ ॥ विनयादिभ्यः स्वार्थे ठण् भवति । विनय एव वैनयिकं समय एव सामयिकम् इत्यादि ॥

**औपयिकम्** ॥ ९१८ ॥ उपाय एव औपयिकम् इति निपात्यते ॥

॥ इति तद्धितसङ्ग्रहः ॥

श्रीमन्नम्रसुरासुराधिपचलन्मौलिप्रभास्वन्मणि-
श्रेणिश्राणितसन्ततार्घ्यविभवो यत्पादपीठीतटः ।
वाचोयुक्तिविविक्तवस्तुविसरो दुष्कर्मनिर्मूलनः
जीयात्सूरिसुभाषितार्चितमहः सोऽयं जिनेन्द्रप्रभुः ॥

॥ प्रक्रियासंग्रहे पूर्वार्द्धं संपूर्णम् ॥

॥ श्रीविद्यागुरुभ्यो नमः ॥

---

सुरासुरनराधीशमौलिमालार्चितक्रमम् ।
आख्यातसर्वतत्त्वार्थं सर्वज्ञं जिनमाश्रये ॥

## ॥ अथ तिङन्तसङ्ग्रहोऽभिधीयते ॥

तद्यथा ॥ भू सत्तायां ॥ भू इत्ययं शब्दः सत्तायामर्थे वर्तते ॥

**क्रियार्थो धातुः** ॥ १ ॥ क्रिया परिणतिः प्रवृत्तिर्वा सा अर्थो वाच्यो यस्य स शब्दो धातुसंज्ञो भवति । स्मे च लडित्यधिकृत्य ॥

**सति** ॥ २ ॥ वर्तमानार्थे वर्तमानाद्धातोर्लट्प्रत्ययो भवति । अटावितौ ॥ अकारो विदो लटो वेति विशेषणार्थः । टकार ए टित इति विशेषणार्थः ॥

**क्तलोऽतुंत्वां** ॥ ३ ॥ क्तो लकाराश्च कर्तरि भवन्ति न तुंत्वामः ॥ एकद्विबहावित्यधिकृत्य ॥

**लोऽन्ययुष्मदस्मासु तिप्तस्झिसिप्थस्थमिब्वस्मस्** ॥ ४ ॥ अन्ययुष्मदस्मदर्थेषु प्रत्येकमेकद्विबहुषु वर्तमानाद्धातोर्लस्य यथासङ्ख्यं तिप् तस् झि सिप् थस् थ मिप् वस् मस् इत्यादेशा भवन्ति । प इत् श्ल्यब्लाविति विशेषणार्थः ॥

**कर्तरि शप्** ॥ ५ ॥ धातोः कर्तरि शिति लेटि लेङि लटि लङि च मध्ये शप् भवति । शपावितौ । शकारः एचोऽश्या इति विशेषणार्थः पकारः पूर्ववत् ॥

**अक्ङिल्लुग्वेतौ** ॥ ६ ॥ पूर्वस्येक एङरौ भवन्ति धातोर्विहिते प्रत्यये परे न किति ङिति लुग्वेतौ च । इत्येङ् अव् ॥

**झोऽन्तः** ॥ ७ ॥ धातोर्लादेशस्य झः अन्तो भवति । अदित् एद इत्यतो लुक् ॥

**आद्भवतः** ॥ ८ ॥ धातोर्भवादौ लिवर्जितलादेशे पूर्वस्यात आद्भवति सुङ् पदमिति पदत्वाद्द्विवादि । स भवति तौ भवतः ते भवन्ति इति प्रथमपुरुषः त्वं भवसि युवां भवथः यूयं भवथ इति मध्यमपुरुषः अहं भवामि आवां भवावः वयं भवामः इत्युत्तमपुरुषः । अन्याद्यप्रयोगेऽपि भवति भवतः भवन्ति भवसि भवथः भवथ भवामि भवावः भवामः । भवच्छब्दप्रयोगेऽपि प्रथमपुरुष एव तस्य पूज्यार्थवाचकत्वात् भवान् भवति भवन्तौ भवतः भवन्तो भवन्ति ॥ एवं वदव्यक्तायां वाचि । अदित् वदति वदतः वदन्ति इत्यादिपरस्मैपदिधातवः शब्विकरणाः सर्वेऽपि नेतव्याः । टुनदु समृद्धौ ॥ टुशब्दोतावितौ ॥

**उदितः** ॥ ९ ॥ उदितो धातोर्नम् भवति । अमावितौ । मित्त्वादन्त्यादचः परो भवति शेषं प्राग्वत् । नन्दति नन्दतः नन्दन्तीत्यादि । एवं चदु दीप्तिह्लादनयोः। चन्दति चन्दतः चन्दन्तीत्यादि ॥ एधि वृद्धौ ॥ इदित् प्राग्वद्धातुसंज्ञायां सतीति लट् ॥

**तातांझथासाथांध्वमिल्वहिमहिङ्ङिदिच्छीयसंक्ष्णपस्कनिविशः॥** १० ॥ ङितः इदितः शीयादेशात् संक्ष्णु अपस्क निविश् इत्येतेभ्यश्च धातुभ्यः परस्य लः अन्ययुष्मदस्मासु प्रत्येकमेकद्विबहुषु यथासङ्ख्यं त आतां झ थास् आथां ध्वम् इल् वहि महिङ् इत्यादेशा भवन्ति । लङावितौ लकारो रन्लो झेलोरिति विशेषणार्थः ङकारः सुङिति प्रत्याहारार्थः । शप् ॥

**ए टितः** ॥ ११ ॥ धातोष्टिल्लादेशस्य तङ एद्भवति । षष्ठ्यास्स्थानेऽन्तेऽल इत्यन्तादेशः ॥

**वह्यामो गेश्** ॥ १२ ॥ टितो लस्तङो वहेरितः आमश्च गेश् भवति । गशावितौ गकारो गित इति सन्धिप्रतिषेधार्थः शकारः सर्वादेशार्थः ॥

**आतोऽपः** ॥ १३ ॥ धातोर्लिवर्जितलादेशस्य आतः अतः परस्य इय् भवति न पितः । लुव्योर्वल्क्काविति यलुक् एङ् झोऽन्तः ॥

**थासस्से** ॥ १४ ॥ टितो लस्थासस्से भवति । ध्वमिलोरेति एद इति लुक् भवयोरात् । एधते एधेते एधन्ते एधसे एधेथे एधध्वे एधे एधावहे एधामहे । एवं स्पर्धि सङ्घर्षे ॥ स्पर्द्धते स्पर्द्धेते स्पर्द्धन्ते ॥ वदुङ् स्तुत्यभिवादनयोः ॥ उङा-वितौ । वन्दते वन्देते वन्दन्ते इत्यादि ॥ आत्मनेपदिधातवोऽन्येऽपि नेतव्याः ॥ डुपचीष् पाके । डुशब्देकारषकारा इतः पूर्ववल्लडादयः । पचति पचतः पचन्ति पचसि पचथः तचथ पचामि पचावः पचामः ॥

**ञीदिदपवदानुपसर्गज्ञः** ॥ १५ ॥ ञितः ईदितः अपवदः अनुपस-र्गस्य जानातेर्धातोर्लः कर्तरि फलेशे तङ् भवति । शेषं प्राग्वत् । पचते पचेते पचन्ते पचसे पचेथे पचध्वे पचे पचावहे पचामहे ॥ एवं णीञ् प्रापणे । ञ इत् फलेशे तङर्थः ॥

**आदेः ष्णोऽष्वष्कष्ट्याष्टीवः स्नं** ॥ १६ ॥ धातोरादेः षस्य सो भवति णस्य नः न ष्वष्कष्ट्याष्टीवां । पूर्ववल्लडादि । ञित्त्वादुभयपदित्वं । नयति नयतः नयन्तीत्यादि नयते नयेते नयन्ते इत्यादि ॥

**तस्यागतार्थाधिपर्यर्चास्वत्यतिक्रमात्युपसर्गः प्राक्** ॥ १७ ॥ धातो-स्सम्बन्धी प्रादिरुपसर्गसंज्ञो भवति ततः प्राक् नियमेन प्रयोज्यः गतार्थावधि-परी अर्चायां स्वती अतिक्रमेऽतिं च वर्जयित्वा । इत्यपपूर्वाद्वदेः अपवदति अपव-दते इत्यादि उभयपदिधातवोऽन्येऽपि नेतव्याः । प्र परा अप सम् अनु अव निर् दुर् वि आङ् नि अधि अपि अति सु उद् अभि प्रति परि उप इति प्रादयो विंशतिः ॥

**अनद्यतने लङ्** ॥ १८ ॥ न्यायोत्थानसंवेशनमध्यकालोऽद्यतनः । ततो-ऽन्यस्मिन्ननद्यतने भूते वर्तमानाद्धातोर्लङ् भवति । ङ इत् एर्ङितो लुगिति विशेषणार्थः अदित् श्लेले यगिति विशेषणार्थः । शबादि ॥

**लङ्लुङ्लृङ्घमाङाट्** ॥ १९ ॥ धातोर्लङि लुङि लृङि च अट् भवति न माङ्योगे । ट इत् टिदादिः ॥

**एर्ङितो लुक्** ॥ २० ॥ ङिल्लादेशस्यातङः इतो लुग्भवति ॥

**तस्थस्थवस्मस्मेस्तान्तन्तवमां लेटश्च** ॥ २१ ॥ ङितो लस्य लेटश्च तसादीनां षण्णां यथासङ्ख्यं तामादयो भवन्ति। झोऽन्तस्तस्य पदस्येति लुक् शेषं प्राग्वत्। अभवत् अभवताम् अभवन् अभवः अभवतम् अभवत अभवम् अभवाव अभवाम ॥

**आरैजाद्यचः** ॥ २२ ॥ अजादेर्धातोर्लङ्लुङ्लृङ्षु आदेरचः आरैचो भवन्ति नमाङ्योगे। लङि टित्त्वाभावात् एत्वादि न भवति। ऐधत ऐधेताम् ऐधन्त ऐधथाः ऐधेथाम् ऐधध्वम् ऐधे ऐधावहि ऐधामहि। एवमन्येऽप्यात्मनेपदिनः। अपचत् अपचताम् अपचन् अपचः अपचतम् अपचत अपचम् अपचाव अपचाम अपचत अपचेताम् अपचन्त अपचथाः अपचेथाम् अपचध्वम् अपचे अपचावहि अपचामहि। एवमन्येऽप्युभयपदिनः ॥

**प्रादिर्नाप्रत्यये** ॥ २३ ॥ प्रादिर्धातुर्न भवति न चेत्ततः प्रत्ययः परो भवति। इत्यधातुत्वात्तं व्युदस्याडादि। अपावदत् अपावदताम् अपावदन् इत्यादि। अपावदत अपावदेताम् अपावदन्त इत्यादि ॥

**लिङ्लेडाशिषि** ॥ २४ ॥ आशिषि धातोर्लिङ्लेटौ भवतः। इति लेट् ट इत् उक्तार्थः एकारः लेटश्चेति विशेषणार्थः ॥

**सेर्ह्यमेर्न्युर्न्यां** ॥ २५ ॥ लेटस्सेर्हिर्भवति इत उत् मेर्निः एत आम् ॥

**तुह्योस्ताद्वाशिषि** ॥ २६ ॥ आशिषि तुह्योस्ताद्वा भवति ॥

**अतो हः** ॥ २७ ॥ अतः परस्य हे र्ङिवर्जितलादेशस्य श्लुग्भवति ॥

**म्वेनादेष्टाप्** ॥ २८ ॥ लेटो म्वेनादेष्टाप् भवति। टपावितौ। दीर्घः। भवतु भवताद्वा भवतां भवन्तु। भव भवताद्वा भवतं भवत। भवानि भवाव भवाम। एवमन्येऽपि परस्मैपदिनः ॥

**खौ वां** ॥ २९ ॥ लेटः सात्परस्य एतौ वौ भवति वात्परस्य अम् ॥

**एतोऽगैप्** ॥ ३० ॥ लेटो म्वेनादेरेतः ऐप् भवति न गित् । शेषं प्राग्वत् । एधताम् एधेताम् एधन्ताम् । एधस्व एधेथाम् एधध्वम् । एधै एधावहै एधामहै । एवमन्येऽप्यात्मनेपदिनः । पचतु पचताद्वा पचतां पचन्तु । पच पचताद्वा पचतं पचत पचानि पचाव पचाम । पचतां पचेतां पचन्तां । पचस्व पचेथां पचध्वं पचै पचावहै पचामहै । एवमन्येऽप्युभयपदिनः ॥

**विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थने** ॥ ३१ ॥ विधिर्नियोगः निमन्त्रणं नियमेन कर्तव्यम् आमन्त्रणं कामचारतः कर्तव्यम् अधीष्टः सत्कारपूर्वको व्यापारः सम्प्रश्नः सम्प्रधारणं प्रार्थना याञ्चा एतेषु धातोर्लेङ्लेटौ भवतः । इति लेङ् एङावितौ अतस्तिबादयः ॥

**ञ्याट्क्यासट्** ॥ ३२ ॥ लेङोऽतङो ञ्याड् भवति लिङः क्यासट् । ञटकाा इतः ॥

**इय्यः** ॥ ३३ ॥ अलेर्लेः या इत्यस्य अतः परस्य इय् भवति । वलि यलुक् ॥

**लेलेः** ॥ ३४ ॥ लेङ्लिङोर्झेर्जुस् भवति । ज इत् शेषं प्राग्वत् । भवेत् भवेतां भवेयुः भवेः भवेतं भवेत भवेयं भवेव भवेम ॥ तङि ॥

**टीय्** ॥ ३५ ॥ लेङ्लिङोस्तङष्टीय् भवति । टिदादिः वलि यलुक् शेषं प्राग्वत् ॥

**रन्तो झेलोः** ॥ ३६ ॥ लेङ्लिङोर्झस्य रन् भवति इलोऽत् । एधेत एधेयाताम् एधेरन् एधेथाः एधेयाथाम् एधेध्वम् एधेय एधेवहि एधेमहि । एवमन्येऽप्यात्मनेपदिनः । पचेत् पचेतां पचेयुः पचेः पचेतं पचेत पचेयं पचेव पचेम । पचेत पचेयातां पचेरन् पचेथाः पचेयाथां पचेध्वं पचेय पचेवहि पचेमहि । एवमन्येऽप्युभयपदिनः सार्वधातुके नेयाः ॥ अद भक्षणे ॥ पूर्ववल्लुङादयः ॥

अथ यङाद्यन्ताद्धातोर्णिच् दर्श्यते ॥ बोभूयते कश्चित्तमन्यः प्रयुङ्क्ते इति विगृह्य प्राग्वण्णिच् । अल्लुक् । शेषं प्राग्वत् । बोभूययति बोभूययते एवं सर्वधातूनां सर्वलकारेषु रूपं नेयं ॥

यङ्लुगन्ताण्णिचि । एङादि बोभावयति बोभावयते एवं सर्वं नेयं ॥

भावयति कश्चित्तमन्यः प्रयुङ्क्ते इति णिजन्ताण्णिचि पूर्वस्य णेर्लुक् शेषं प्राग्वत् भावयति भावयते इत्यादि सर्वं नेयं । बुभूषति कश्चित्तमन्यः प्रयुङ्क्ते इति सनन्ताण्णिचि । अल्लुक् बुभूषयति बुभूषयते एवं सर्वं नेयं ॥

बोभूयितुमिच्छतीति यङन्तात्सनिडादि ।

**द्विरेकेषां** ॥ २२२ ॥ द्विरुक्तो धातुर्द्विर्वा भवति । बुबोभूयिषते बोभूयिषते इत्यादि सर्वं नेयं ॥

यङ्श्लुगन्तात्सनि । बुबोभविषति बोभविषति इत्यादि ।
भावयितुमिच्छतीति णिजन्तात् सनि णिच्कार्यात् प्रागेव द्विः ॥

**ओः पुयञ्ज्ये** ॥ २२३ ॥ सनि द्विर्भावे पूर्वस्योवर्णस्य अवर्णपरे पवर्गे यञि जे च परे इद्भवति । बिभावयिषति बिभावयिषते । अतत्सन इति वचनात् सनन्तात् सन्नास्ति । यङन्तणिजन्तात्सनि । बुबोभूययिषति । ते । बोभूययिषति । ते । यङ्श्लुङ्णिजन्तात्सनि बुबोभावयिषति । ते । बोभावयिषति । ते । णिच्णिजन्तात् सन्नेष्यते णिजन्तादविशेषात् । सनन्तणिजन्तात् सन्नेष्यते आचार्याणां विसंवादात् । इति पञ्चभ्यः सन्नुदाहृतः ॥

पुनरेतदन्तादेव णिजुदाह्रियते ॥ यङन्तसनन्ताण्णिचि । बुबोभूयिषयति । ते । बोभूयिषयति । ते । यङ्श्लुगन्तसनन्ताण्णिचि । बुबोभविषयति । ते । बोभविषयति । ते । णिजन्तसनन्ताण्णिचि । बिभावयिषयति । ते । यङ्णिजन्तसनन्ताण्णिचि । बुबोभूययिषयति । ते । बोभूययिषयति । ते । यङ-

श्लुगन्तणिञन्तसनन्ताण्णिञि । बुबोभावयिषयति । ते । बोभावयिषयति । ते । एवमन्येष्वपि नेयं ॥

परमप्रकृतिर्यङ् यङ्श्लुक् णिञ् सन् णिञ् ततोऽसनस्संश्च ।

तस्माण्णिञिति प्रकृतिः विज्ञेयैकान्नविंशतिधा ॥

कण्डूञ् गात्रविकर्षणे । ञ इत् ॥

**धातोः कण्ड्वादेर्यक्** ॥ २२४ ॥ कण्ड्वादिभ्यो धातुभ्यः स्वार्थे यग् भवति । क इत् प्राग्वल्लडादि । कण्डूयति कण्डूयते । भावादौ कण्डूय्यते । एवं सर्वलकारेषु नेयं । णिञि कण्डूययति कण्डूययते । सनि ॥

**यकस्तृतीयः** ॥ २२५ ॥ यगन्तस्य धातोस्तृतीय एकाच् द्विर्भवति । कण्डूयियिषति कण्डूयियिषते चिकण्डूयिषति चिकण्डूयिषते एवं सर्वत्र योज्यं ॥ मन्तु रोषे वैमनस्ये च । यकि मन्तूयति ॥ वल्गु माधुर्ये च । वल्गूयति । असु मानस उपतापे । असूयति । महिङ् वृद्धौ पूजायां च । ङ इत् महीयते इत्यादि ॥

सुबन्तप्रकृतेर्लकाराः प्रदर्श्यन्ते । पुत्र अम् इति स्थिते पुत्रं कामयते आत्मन इति विगृह्य ॥

**सुपः कर्त्तुः काम्यः** ॥ २२६ ॥ कम्याप्यात्थात् सुबन्तात्कर्त्तुरात्मन एव सम्बन्धिनः कम्यर्थे काम्यः प्रत्ययो वा भवति । अमः श्लुक् धातुसंज्ञायां । लडादि । पुत्रकाम्यति एवं राजकाम्यति मालाकाम्यति इदङ्काम्यति स्वःकाम्यति ॥

**क्यचामाव्ययात्** ॥ २२७ ॥ सुबन्तात् कम्याप्यात्थात् कर्त्तुरात्मन एव सम्बन्धिनः कम्यर्थे क्यच् प्रत्ययश्च भवति न मान्तादव्ययान्ताच्च । कचावितौ ॥

**च्वौ चास्यानव्ययस्येः** ॥ २२८ ॥ अवर्णस्य क्यचि च्वौ च परे ईद् भवति नाव्ययस्य । पुत्रमिच्छत्यात्मनः पुत्रीयति एवं मालीयति ॥

27

**नङ् क्ये** ॥ २२९ ॥ नान्तं क्ये परे पदं भवति । पदत्वान्नलुक् । राजानमिच्छत्यात्मनः राजीयति एवं शर्म्मीयति । यङलेङिति दीर्घः । शिखीयति कवीयति इक्षूयति । यङलेङिति री । पित्रीयति कर्त्रीयति ॥

**ओदौतोऽवाव्यि** ॥ २३० ॥ ओतः यप्रत्यये अव् भवति औत आव् । गव्यति नाव्यति ॥

**क्यच्यसक्सग्लालसायां** ॥ २३१ ॥ क्यचि परे पूर्वस्यासक् सक् च भवतः लालसायां लाम्पट्ये । अकावितौ । क्षीरस्यति असक्सात इति प्रतिषेधान्न षिः । दध्यस्यति दधिस्यति ॥

**वृषाश्वयोर्मैथुने** ॥ २३२ ॥ वृषाश्वशब्दयोः क्यचि मैथुनलालसायामसक् सक् च भवतः । वृषस्यति गौः अश्वस्यति बडवा वाच्यति स्रज्यति युष्मद्यति त्वद्यति अस्मद्यति मद्यति गीर्यति दीव्यति ॥

**क्षुत्तृड्गर्धेऽशनायोदन्यधनायम्** ॥ २३३ ॥ अशनायादयो यथासङ्ख्यं क्षुदादिष्वर्थेषु क्यजन्ता निपात्यन्ते । अशनायति उदन्यति धनायति ॥

पुत्रीयितुमिच्छतीति सनि ॥

**सुपः** ॥ २३४ ॥ सुब्धातोः सन्यङन्तस्य लिटि ङे च परे पूर्वस्य एकाच्कोऽवयवो द्विर्वा यथासम्भवं भवति । पुपुत्रीयिषति पुतित्रीयिषति पुत्रीयियिषति पुत्रीयिषिषति ॥

**नाद्यच्** ॥ २३५ ॥ सुब्धातोरादिरच् नद्विर्भवति । अश्वीयितुमिच्छतीति सनि । अशिश्वीयिषति अश्वीयियिषति अश्वियियिषति ॥

प्रासादे इवाचरतीति विगृह्य ॥

**गौणादाधाराच्चाचरि** ॥ २३६ ॥ आचरेराप्यादाधाराच्च गौणात् सुबन्तादाचर्यर्थे क्यच् भवति न माव्ययात् । शेषं प्राग्वत् प्रासादीयति कुट्यां । पुत्रमिवाचरतीति पुत्रीयति छात्रम् । अश्व इवाचरतीति विगृह्य ॥

**कर्त्तुः क्विप्** ॥ २३७ ॥ आचरेः कर्त्तुः गौणात्सुपः आचर्यर्त्थे क्विप् भवति । स सर्व इत् । अश्वति खरः एवं काकति गर्द्दभति । क्विजलीति दीर्ग्घः इदमिवाचरति इदामति कीमति । श्येन इवाचरतीति विगृह्य ॥

**प्क्यङ्** ॥ २३८ ॥ आचरेः कर्त्तुर्गौणात्सुपः आचर्यर्त्थे प्क्यङ् भवति । पकङा इतः । यङ्क्लेङिति दीर्ग्घः लस्तङादि । श्येनायते कुमारीवाचरति कुमारायते । पित्त्वादतद्धितेऽपि पुम्भावः त्वयते मयते ॥

**सो वा लुक् च** ॥ २३९ ॥ सकारान्तस्य प्क्यङि लुग्वा भवति । पयायते पयस्यते ॥

**अप्सरसः** ॥ २४० ॥ अप्सरसः प्क्यङि नित्यं लुग् भवति । अप्सरायते कन्या ॥

**भृशादेश्च्वौ स्तः** ॥ २४१ ॥ भृशादेः कर्त्तुः च्व्यर्त्थे प्क्यङ् भवति सत-योश्च लुक् । अभृशो भृशो भवति भृशायते शीघ्रायते उन्मनायते वेहायते ॥

**निद्रादिडाज्भ्यो धर्म्मिणि क्यष्** ॥ २४२ ॥ निद्रादिभ्यो डाजन्तेभ्यः च धर्म्मिणि च्व्यर्त्थे क्यप् भवति । कपावितौ । अत एव कृभ्वस्तिभिरयोगेऽपि डाज्विधिः ॥

**क्यषो वा** ॥ २४३ ॥ क्यषन्ताल्लस्तङ् वा भवति । अनिद्रो निद्रावान् भवति निद्रायति निद्रायते त्रैविधः करुणायति करुणायते धर्म्मायति धर्मायते ॥

अपटत् पटद्भवद् भवतीति विगृह्य । डाचि द्विः । डचावितौ ॥

**डाच्यादौ** ॥ २४४ ॥ द्विर्भावे पूर्वस्य तस्य लुग् भवति डाचि परे । अन्त्याजादिलुक् ततः क्यप् । पटपटायति पटपटायते एवं गुमुगुमायति गुमु-गुमायते इत्यादि । सूत्रं करोतीति विगृह्य ॥

**णिज् बहुलं कृञादिषु** ॥ २४५ ॥ सुबन्तात् कृञाद्यर्त्थेषु बहुलं णिच् भवति । णचावितौ सुपः श्लुक् । अन्त्याजादेः इलतो लुक् पूर्ववल्लडादि ।

सूत्रयति एवं मुण्डयति मिश्रयति व्रतयति । कृतं गृह्णाति कृतयति । पाशं विमोचयति विपाशयति । रूपं दर्शयति रूपयति । लोमान्यनुमार्ष्टि अनुलोमयति । पटुमाचष्टे पटयति । मालां ग्रथ्नाति मालयति । तृणान्युल्लुनाति उत्तृणयति । वस्त्रेण समाच्छादयति संवस्त्रयति । वीणया उपगायति उपवीणयति । श्लोकैरुपस्तौति उपश्लोकयति । सेनया अभियाति अभिषेणयति । स्थासेनीति षिः वर्म्मणा सन्नह्यति संवर्म्मयति । वास्या च्छिनत्ति वासयति अश्वेनातिक्रामति अत्यश्वयति ॥

**सत्यार्थवेदस्याः** ॥ २४६ ॥ सत्यादेरतो णिचि आद्भवति । पक् । सत्यं करोति सत्यापयति । अर्थमाचष्टे अर्थापयति । वेदमधीते वेदापयति ॥

**निरस्यङ्गेभ्यः कर्म्मणो णिङ्** ॥ २४७ ॥ अङ्गवाचिनः कर्म्मणो निरस्यत्यर्थे णिङ् भवति । णङावितौ । हस्तं निरस्यति हस्तयते एवं पादयते मूर्धयते ॥

**पुच्छभाण्डादसमाचौ** ॥ २४८ ॥ पुच्छादस्यत्यर्थे णिङ् भवति भाण्डात् समाचिनोत्यर्थे । पुच्छमुदस्यति उत्पुच्छयते भाण्डं समाचिनोति सम्भाण्डयते ॥

**बाष्पोष्मफेनादुद्वमि** ॥ २४९ ॥ बाष्पादेरुद्वमत्यर्थे क्यङ् भवति । कङावितौ नङ् क्ये इति पदत्वान्नलुक् । बाष्पमुद्वमति बाष्पायते एवम् ऊष्मायते फेनायते ॥

**सुखादेर्भुजि** ॥ २५० ॥ सुखादेर्भुज्यर्थे क्यङ् भवति । सुखं भुङ्क्ते सुखायते एवं दुःखायते क्लेशायते ॥

**शब्दादेः कृञि वा** ॥ २५१ ॥ शब्दादेः कृञ्यर्थे क्यङ् वा भवति । शब्दं करोति शब्दायते शब्दयति वा कलहायते कलहयति वा ॥

**रोमन्थादुच्चर्वणे** ॥ २५२ ॥ रोमन्थादुच्चर्वणे क्यङ् भवति । रोमन्थमुच्चर्वति रोमन्थायते ॥

**नमोवरिवस्तपसः क्यच्** ॥ २९३ ॥ नमसादिभ्यः कृञ्यर्थे क्यच् भवति। नमस्करोति नमस्यति वरिवस्यति तपस्यति ॥

**चित्रङो विस्मये** ॥ २९४ ॥ विस्मये वर्त्तमानात् चित्रङ्शब्दात् क्यच् भवति। ङित्त्वात्तङ्। चित्रं करोति चित्रीयते एवं सर्वत्र योज्यम् ॥

इति सुब्धातुप्रकरणम् ॥

**सल्लड्वत्स्यंल्लृटो वानितौ** ॥ २९५ ॥ सति लटो भविष्यति लृटश्च अतङ्वत् शतृ वा भवति तङ्वदानश् नेतौ। ऋशावितौ शेषं प्राग्वत् ततः स्वादयः नमादि। भवन् भवन्तौ भवन्तः इत्यादि भविष्यन् भविष्यन्तौ भविष्यन्तः इत्यादि ॥

**मगाने** ॥ २९६ ॥ अदन्तस्य मग् भवति आने परे। अकावितौ। एधमानः एधमानौ एधमानाः एधिष्यमाणः एधिष्यमाणौ एधिष्यमाणाः इत्यादि। एवं पचन् पचमानः। अदन् शयानः ब्रुवन् ब्रुवाणः। जुह्वत् जिहानः दधत् दधानः। दीव्यन् सूयमानः नह्यन् नह्यमानः। सुन्वन् अश्नुवानः चिन्वन् चिन्वानः। क्रीणन् वृणानः गृह्णन् गृह्णानः। तुदन् म्रियमाणः मुञ्चन् मुञ्चमानः। तन्वन् मन्वानः कुर्वन् कुर्वाणः। रुन्धन् भुञ्जानः युञ्जन् युञ्जानः। चोरयन् छादयमानः लक्षयन् लक्षयमाणः योजयन् योजन् अर्चयन् अर्चमानः वारयन् वरन् वरमाणः॥ भावकर्मणोः भूयमानम् अनुभूयमानः एध्यमानं पच्यमान इत्यादि सर्वं योज्यं। बोभूयमानः बोभुवत् भावयन् भावयमानः बुभूषन् एदिधिषमाणः कण्डूयन् कण्डूयमानः इत्यादि सर्वत्र योज्यं ॥

**लिटः क्वसुकानौ** ॥ २९७ ॥ लिटः स्थाने अतङ्वत् क्वसुर्भवति तङ्वत् कानः। कौतावितौ शेषं प्राग्वत् क्वसौ स्वादिनियमात् प्राप्तस्येटः ॥

**क्वस्यैकाज्घसः** ॥ २९८ ॥ आदन्तादेकाचो घसश्च क्वस इट् भवति नान्यस्मादिति नियमान्नेट् ततः स्वादयः नमादि। बभूवान् बभूवांसौ बभूवांसः।

शसादौ क्वस उसि उवादेशे लुङ्लिटि भुव इति उत ऊत् बभूवुषः बभूवुषा बभूवद्भ्याम् इत्यादि एधांचक्राणः । तप्फलीत्यत एति द्विरुक्त्यभावादिट् । पेचिवान् इत्यादि । क्वस उसि सर्वत्र । वलाद्यभावान्नेट् पेचुषः पेचुषा इत्यादि । पेचानः । जक्षिवान् आदिवान् शिश्यानः ऊचिवान् ऊचानः । जुहुवान् जिहानः दधिवान् दधानः । दिदिवान् सुषुवाणः नेहिवान् नेहानः । सुषुवान् आनशानः चिच्चिवान् चिच्यानः । चिक्रीवान् वव्राणः जगृह्वान् जगृहाणः । तुतुद्वान् ममृवान् मुमुच्वान् मुमुचानः । तेनिवान् मेनानः चकृवान् चक्राणः । रुरुध्वान् बुभुजानः युयुज्वान् युयुजानः । चोरयांचकृवान् क्षादयांचक्राणः लक्षयाञ्चकृवान् लक्षयाञ्चक्राणः योजयाञ्चकृवान् युयुज्वान् अर्चयाञ्चकृवान् आनर्चानः वारयाञ्चकृवान् ववृवान् वव्राणः बोभूयाञ्चक्राणः बोभवांचकृवान् भावयांचकृवान् भावयाञ्चक्राणः बुभूषाञ्चकृवान् इत्यादि सर्वत्र नेयम् ॥

अथ केषां चिद्धातूनां प्रक्रियाविशेष उच्यते ॥

**गुपौधूबिच्छिपन्पणेराय:** ॥ २५९ ॥ गुपादिभ्यो धातुभ्यः आयप्रत्ययो भवति स्वार्थे । पुनर्लडादि ॥ गुपौ रक्षणे । औदित् गोपायति । धूप तप सन्तापे । धूपायति । विच्छ गतौ विच्छायति । पनि स्तुतौ । पणि व्यवहारे च । इदित् । पनायति पणायति ॥

**कमृतेर्णिङीयङ्** ॥ २६० ॥ कमेः स्वार्थे णिङ् भवति ऋतेरीयङ् । णङावितौ णित्यात् । कमूङ् कान्तौ । ऋत घृणागतिस्पर्धेषु । कामयते ऋतीयते ॥

**नित्याश्शपि** ॥ २६१ ॥ एते प्रत्ययाः शपि नित्या भवन्ति अन्यत्र विकल्पिताः । गोपाय्यात् गुप्यात् गोपायाञ्चकार जगोप इत्यादि ॥

**तपस्तपसि** ॥ २६२ ॥ तपेः कर्तरि कर्मवत् कार्यं भवति तपसि कर्मणि । कर्मत्वाद्यगादि तप्यते तपांसि धीरः करोतीत्यर्थः ॥

**कित्तिजगुपेर्भिषज्यादिचमानिन्द्ये सन्** ॥ २६३ ॥ कितेर्भिषज्याविनाशच्छेदनसन्देहेषु सन् भवति तिजेः क्षमायां गुपेर्निन्दायां । नकिदिति नेट् शेषं प्राग्वत् । कित निवासे । अदित् चिकित्सति । तिजि क्षमानिशामनयोः । इदित् । तितिक्षते । गुपि गोपने जुगुप्सते ॥

**शान्दान्मान्वधान्निशानार्जवजिज्ञासावैरूप्य ईच्चैः** ॥ २६४ ॥ शानो निशाने सन् भवति दान आर्जवे मानो जिज्ञासायां बधो वैरूप्ये इत ईच्च । शानी तेजने । ईदित् । शीशांसति शीशांसते । दानी अवखण्डने । ईदित् दीदांसति दीदांसते । मानि पूजायाम् इदित् मीमांसते । बधि बन्धने । इदित् बीभत्सते । कृपौङ् सामर्थ्ये । औडावितौ शप्यर् ॥

**कृपोऽकृपीटादिषु** ॥ २६५ ॥ कृपो रस्य लो भवति न कृपीटादिस्थस्य । कल्पते । घेट् पा पाने । पा इत्यतो लडादि ॥

**पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिश्रौतिधिन्वुकृण्वुशदसदः पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशृधिकृणशीयसीदम्** ॥ २६६ ॥ पादीनां शिति प्रत्यये यथासङ्ख्यं पिबादयो भवन्ति । शेषं प्राग्वत् पिबति पिबतः पिबन्ति इत्यादि । घ्रा गन्धोपादाने । जिघ्रति । ध्मा शब्दाग्निसंयोगयोः । धमति । ष्ठा गतिनिवृत्तौ । तिष्ठति । म्ना अभ्यासे । मनति । दाण् दाने । यच्छति दृशृ प्रेक्षणे । ऋदित् । पश्यति । ऋ गतौ । ऋच्छति । श्रु श्रवणे । स्वादित्वात् श्रुः शृणोति । धिवु प्रीणने । धिनोति । कृवु हिंसाकरणयोः । कृणोति । शद्लृ शातने । लृदित् । शीयते । ङिदित्शीयेत्यनेन तङ् । षद्लृ विशरणगत्यवसादनेषु । लृदित् । षस्सः । सीदति ॥

**सर्त्तेर्धौ वेगे** ॥ २६७ ॥ सर्त्तेर्धौ भवति वेगे गम्यमाने । सृ गतौ । धावति ॥

**यमिषोः शि च्छः** ॥ २६८ ॥ यमादीनां शिति च्छो भवति । यम

उपरमे । यच्छति । गम्लृ सृप्लृ गतौ । लृदित् गच्छति । इषू इच्छायाम् । ऊदित् । तुदादित्वात् शः । इच्छति । चमू अदने । ऊदित् आङ्पूर्वत्वे ॥

**ष्ठिवूक्लम्वाचमः** ॥ २६९ ॥ एतेषामकः शिति दीर्घो भवति । आचामति । ष्ठिवू निरसने । ऊदित् । ष्ठीवति । अष्वक्कष्वाष्ठीव इति निषेधान्न सत्वं । क्लमू ग्लाने । ऊदित् । क्लामति । क्रमू पादविक्षेपे । ऊदित् ॥

**क्रमोऽतङाने** ॥ २७० ॥ क्रमोऽकः शिति दीर्घो भवति न तङानयोः । क्रामति । अतङान इति किं ॥

प्रत्यक्षबुद्धिः क्रमते न यत्र तल्लिङ्गगम्यं न तदर्थलिङ्गम् ।
वाचो न वा तद्विषयेण योगः का तद्गतिः कष्टमशृण्वतां ते ॥

आक्रममाणश्चन्द्रः । धुर्वै हिंसायाम् । ऐदित् धातोर्र्वीति दीर्घः धूर्वति । अक्षौ व्याप्तौ च । औदित् ॥

**अक्षः श्नुः** ॥ २७१ ॥ अक्षः श्लेले श्नुर्भवति वा । श इत् । णत्वम् । अक्ष्णोति ॥ तक्षू तनूकरणे ॥

**तक्षस्तनूकृतौ** ॥ २७२ ॥ तनूकृतौ तक्षः श्लेले श्नुर्भवति । तक्ष्णोति ॥

**स्तन्भूस्तुन्भूस्कन्भूस्कुन्भूस्कोः श्ना च** ॥ २७३ ॥ एतेभ्यः श्लेले श्ना च श्नुश्च भवतः । स्तन्भू स्तम्भे । ऊदित् हलो न इति नलुक् । स्तभ्नाति स्तभ्नोति स्तुभ्नाति स्तुभ्नोति स्कभ्नाति स्कभ्नोति स्कुभ्नाति स्कुभ्नोति स्कुनाति स्कुनोति । दन्श दशने ॥

**दन्शसञ्जः शपि** ॥ २७४ ॥ अनयोः शपि नस्य लुग् भवति । दशति । षन्ज सङ्गे । षस्सः । नलुक् । सजति । रन्जी रागे । ईदित् ॥

**रन्जः** ॥ २७५ ॥ रन्जः शपि नस्य लुग् भवति । रजति रजते ॥ गुहौञ् संवरणे । औञावितौ । शप्येङ् ॥

**गोहोऽचि** ॥ २७६ ॥ गुहः ओतः अजादौ प्रत्यये परे ऊद्भवति । गूहति गूहते ॥

अथ अदादिः । विद ज्ञाने ॥ अदित् ॥

**विदो लटो वा** ॥ २७७॥ अदादेर्विदो लटस्तिबादीनां नवानां यथासङ्ख्यं णबादयो वा भवन्ति । वेद विदतुः विदुः वेत्थ विदथुः विद वेद विद्व विद्म । वेत्ति वित्तः विदन्ति इत्यादि । संपूर्वत्वे संवित्ते संविदाते ॥

**वेत्तेर्वा** ॥ २७८ ॥ वेत्तेस्तङो झेरद्वा भवति । संविद्रते संविदते । लङि । सिविदेति झेर्जुस् । सिपि दश्चेति वा रिः । अवेत् अवित्ताम् अविदुः अवेः अवेत् अवित्तम् अवित्त अवेदम् अविद्व अविद्म ॥ लेटि ॥

**लेटः कृलेट्** ॥ २७९ ॥ विदो लेटः किदाम् वा भवति लेडन्तश्च कृञनुप्रयुज्यते । विदांकरोतु । वेत्तु ॥ हन हिंसागत्योः ॥ अदित् । ततो लडादि । अपिति ङित्वात् ॥

**हन्मन्यंरङ्गनम्वनतितनादेर्लुग् जलि** ॥ २८० ॥ हनादीनां वनतेस्तनादीनां च जलादौ किति ङिति च प्रत्यये लुग् भवति । झोऽन्ते । गांहन्जनित्यतो लुचि हो घः । हन्ति हतः घ्नन्ति हंसि हथः हथ हन्मि हन्वः हन्मः । लङि । अहन् अहताम् अघ्नन् अहन् अहतम् अहत अहनम् अहन्व अहन्म । लेटि ॥

**ध्राध्येधिजहि** ॥ २८१ ॥ एते ही निपात्यन्ते । हन्तेर्ही जहि । हन्तु हताद्वा हतां घ्नन्तु । जहि हताद्वा हतं हत । हनानि हनाव हनाम । लेङि ॥ हन्यात् हन्यातां हन्युरित्यादि । अस भुवि । अपिति नमस्त्योर्लुगित्यतो लुक् । सिपि । तासस्त्योस्त्वीति सलुक् । अस्ति स्तः सन्ति । असि स्थः स्थ । अस्मि स्वः स्मः । लङि स्यस्तेस्सोऽल इतीट् । आरैच् । आसीत् आस्ताम् आसन् । आसीः आस्तम् आस्त । आसम् आस्व आस्म ॥ लेटि हावेधि । अस्तु स्ताद्वा स्तां

सन्तु । एधि स्ताद्वा स्तं स्त । असानि असाव असाम । लेङि । स्यात् स्यतां स्युः । इत्यादि ॥ मृजो शुद्धौ ॥ औदित् पित्यरि ॥

**मृजुः** ॥ २८२ ॥ मृज ऋतोऽत आद्भवति ॥

**आर्वाचि** ॥ २८३ ॥ मृज ऋतोऽजादौ प्रत्यये आर् वा भवति । व्रश्चेति षत्वे ष्टुत्वं । मार्ष्टि मृष्टः मृजन्ति मार्जन्ति । मार्क्षि मृष्ठः मृष्ठ । मार्ज्मि मृज्वः मृज्मः ॥ लङि । लेति पदान्तस्य लुक् । जश्त्वादि ॥ अमार्ट् अमृष्टाम् अमृजन् अमार्जन् । अमार्ट् अमृष्टम् अमृष्ट । अमार्जम् अमृज्व अमृज्म । लेटि । मार्ष्टु मृष्टाद्वा मृष्टां मृजन्तु मार्जन्तु । मृड्ढि मृष्टाद्वा मृष्टं मृष्ट । मार्जानि मार्जाव मार्जाम । लेङि । मृज्यात् मृज्यातां मृज्युः इत्यादि । वच परिभाषणे । अकित्त्वान्न यत्र इक् । वक्ति वक्तः वचन्ति इत्यादि । रुद् अश्रुविमोचने । ऋदित् ॥

**वल इट्** ॥ २८४ ॥ रुदादेर्जक्षिपर्यन्तात् परस्य वलादेरलेर्ल इड् भवति । रोदिति रुदितः रुदन्तीत्यादि । लङि ॥

**ईट् चाजक्षुद्भ्यः** ॥ २८५ ॥ रुदादेर्जक्षिपर्यन्तात् परस्य अक्ङितो हलादेरलेर्लः अल्मात्रस्य अडीटौ भवतः । अरोदत् अरोदीद्वा अरुदिताम् अरुदन् । अरोदः अरोदीः अरुदितम् अरुदित । अरोदम् अरुदिव अरुदिम । लेट् ॥ रोदितु रुदिताद्वा रुदितां रुदन्तु रुदिहि रुदिताद्वा रुदितं रुदित । रोदानि रोदाव रोदाम ॥ लेङि । रुद्यात् रुद्यातां रुद्युः इत्यादि । एवं ञिष्वप् शये । ञिदित् । षस्सः । स्वपिति स्वपितः स्वपन्तीत्यादि ॥ अन श्वस प्राणने । अदित् । अनिति श्वसिति ॥ जक्ष भक्षहसनयोः । अदित् झोऽत् । जक्षिति जक्षितः जक्षतीत्यादि । जागृ निद्राक्षये ॥ झोऽत् । जागर्त्ति जागृतः जाग्रति । जागर्षि जागृथः जागृथ जागर्मि जागृवः जागृमः ॥ लङि झेर्जुस् । अजक्षत् अजक्षीद्वा अजक्षिताम् अजक्षुः इत्यादि अजागः अजागृताम् अजागरुः

इत्यादि । लेटि । जागर्त्तु जागृताद्वा जागृतां जाग्रतु इत्यादि । लेङि । जागृयात् जागृयातां जागृयुरित्यादि ॥ दरिद्रा दुर्गतौ ॥

**इद्दरिद्रः** ॥ २८६ ॥ दरिद्रातेरातः अपिति यि च हलादौ लिवर्जितलादेशे परे इद्भवति । त इत् झोऽति श्नाज्ञेरातः इत्यातो लुक् । दरिद्राति दरिद्रितः दरिद्रति । दरिद्रासि दरिद्रिथः दरिद्रिथ । दरिद्रामि दरिद्रिवः दरिद्रिमः ॥ लङि अदरिद्रात् अदरिद्रिताम् अदरिद्रुरित्यादि ॥ लेटि । दरिद्रातु दरिद्रिताद्वा दरिद्रितां दरिद्रतु । दरिद्रिहि दरिद्रिताद्वा दरिद्रितं दरिद्रित । दरिद्राणि दरिद्राव दरिद्राम । लेङि । दरिद्रियात् दरिद्रियातां दरिद्रियुरित्यादि । चकासृ दीप्तौ । ऋदित् झोऽत् । चकास्ति चकास्तः चकासति । इत्यादि । लङि । अन्तलुचि । अतिपीति निषेधान्न सस्य रिः । जश्त्वचर्त्वे ॥ अचकात् अचकाद् अचकास्ताम् अचकासुरित्यादि । लेटि । चकास्तु चकाद्धि चकाधि । लेङि । चकास्यात् ॥ शासू अनुशिष्टौ । ऊदित् अपिति ॥

**शासः क्ङित्यङ्हलीत्** ॥ २८७ ॥ शास उपान्त्यस्य अङि हलि च किति ङिति च परे इद्भवति । त इत् षत्वष्टुत्वे ॥ शास्ति शिष्टः शासति । शास्सि शिष्ठः शिष्ठ । शास्मि शिष्वः शिष्मः ॥ लङि । अशात् अशिष्टाम् अशासुः । अशाः अशात् अशाद् । सिपि दश्चेति वा रिः । अशिष्टम् अशिष्ट अशासम् अशिष्व अशिष्म । लेटि । शास्तु शिष्टाद्वा शिष्टां शासतु । सिपि । शाधिभावः । शाधि शिष्टाद्वा शिष्टं शिष्ट । शासानि शासाव शासाम । लेङि । शिष्यात् शिष्यातां,शिष्युः इत्यादि ॥ वश कान्तौ । षत्वष्टुत्वे । अपिति । वशिव्यचीत्यादिना यज इक् सिपि षत्वे कत्वादि । वष्टि उष्टः उशन्ति वक्षि उष्ठः उष्ठ वश्मि उश्वः उश्मः ॥ लङि ॥ अन्तलुचि षत्वादि । अपिति इकि ऐच् । अवट् औष्टाम् औशन् । अवट् औष्टम् औष्ट अवशम् औश्व औश्म ॥ लेटि । हेर्धौ । षत्वं । टापि नेक् । वष्टु उष्टाद्वा उष्टाम् उशन्तु । उड्ढि

उष्टाद्वा उष्टम् उष्ट । वशानि वशाव वशाम । लेङि । उश्यात् उश्याताम् उश्युरित्यादि ॥ द्यु अभिगमने ॥

**ह्ल्वोरौत्** ॥ २८८ ॥ उवर्णस्य अक्ङिति हलि ल्यलौ औद्भवति । द्यौति द्युतः द्युवन्ति इत्यादि । लेङि । अलेङ्क्तीति निषेधान्न दीर्घः । द्युयात् । क्ष्णु तेजने । सम्पूर्वत्त्वे तङ् संक्ष्णुते संक्ष्णुवाते संक्ष्णुवते इत्यादि । स्नु प्रस्रवणे । स्नौति । णु स्तुतौ । णो नः । नौति । इण् गतौ । पिल्लेङ् अचि क्ङिणोऽचीति यञ् । एति इतः यन्ति एषि इथः इथ एमि इवः इमः । लङि ऐच् । अच्याय् । ऐत् ऐताम् आयन् ऐः ऐतम् ऐत । आयम् ऐव ऐम । लेटि । एतु इताद्वा इतां यन्तु । इहि इताद्वा इतम् इत । अयानि अयाव अयाम । लेङि । इयात् इयाताम् इयुरित्यादि । इक् स्मरणे । क इत् । एति इतः ॥

**वेकः** ॥ २८९ ॥ इको धातोः अजादौ श्लेले यञ् वा भवति । पक्षे इय् यन्ति इयन्तीत्यादि । या प्रापणे । याति यातः यान्तीत्यादि । लङि ॥

**आद्विषो झेर्जुस्वा** ॥ २९० ॥ आदन्ताद्विषेश्च परस्य ङितो लः झेर्जुस्वा भवति । ज इत् । क्षुगुसीत्यातो लुक् । अयात् अयाताम् अयुः अयान्वा इत्यादि । लेटि । यातु । लेङि । यायात् । एवं वा गतिगन्धनयोः इत्यादयः आदन्ता नेयाः । चक्षि व्यक्तायां वाचि । इदित् । तङ् । संयोगस्येति कलुक् सयि कलुचि षस्य कः सः षः ध्वादौ जश्त्वष्टुत्वे । चष्टे चक्षाते चक्षते चक्षे चक्षाथे चड्ढ्वे । चक्षे चक्ष्वहे चक्ष्महे इत्यादि । ईरि गतौ । ईर्ते । ईडि स्तुतौ ॥

**ईशीड्भ्यां स्ध्वे** ॥ २९१ ॥ ईशीड्भ्यां परस्यालेर्लस्सादेः ध्वादेश्च इड् भवति । ट इत् । ईट्टे ईडाते ईडते । ईडिषे ईडाथे ईडिध्वे । ईडे ईड्वहे ईड्महे । ईशि ऐश्वर्ये । इदित् ईष्टे ईशाते ईशते । ईशिषे ईशाथे इत्यादि । आसि उपवेशने । आस्ते आसाते आसते इत्यादि । शिजुङ् अव्यक्ते शब्दे । उङावितौ । नम् । कुत्वे नस्य ङः । अकुत्वे ञः । शिङ्क्ते शिञ्जाते शिञ्जते

इत्यादि । इङ् अध्ययने । अधीते अधीयाते अधीयते इत्यादि । द्विषी अप्रीतौ । ईदित् द्वेष्टि द्विष्टे । ऊर्णुञ् आच्छादने ॥

**वोर्णोः** ॥ २९२ ॥ ऊर्णुञः अक्ङिति हलि ल्यलौ औद्वा भवति । ऊर्णोति ऊर्णौति । ष्टुञ् स्तुतौ ॥ यङ्तुर्विति वा ईट् । स्तवीति स्तौति स्तुते ॥

अथ ह्वादिः ॥ ञिभी भये । ञिदित् । ह्वादित्वात् शपः श्लुपि द्विर्भावादि तसादौ ॥

**भ्यो वा** ॥ २९३ ॥ भियोऽपिति यि च हलादौ ल्यलौ इद्वा भवति । बिभेति बिभीतः बिभितः बिभ्यतीत्यादि ॥ पॄ पालनपूरणयोः । इत्वं पिपर्त्ति पिपृतः पिप्रतीत्यादि । ऋ गतौ इत्वे ॥

**पूर्वस्यास्वेऽचीयुव्योः** ॥ २९४ ॥ द्विर्भावे पूर्वस्य इवर्णोवर्णयोरस्वेऽचि परे यथासङ्ख्यम् इयुवौ भवतः । इयर्ति इयृतः इय्रति । लङि । इयादेशे ऐच् । ऐयः ऐयृताम् ऐयरुः ॥ ओहाक् त्यागे । क इत् ॥

**हाकः** ॥ २९५ ॥ हाकोऽपिति यि च हलादौ ल्यलौ इद्वा भवति । जहाति जहीतः जहितः जहति ॥

**आ च हौ** ॥ २९६ ॥ हाको हौ इदाच्च वा भवतः । जहिहि जहीहि जहाहि ॥

**यि लुक्** ॥ २९७ ॥ हाकः यादौ ल्यलौ लुग् भवति । जह्यात् ॥ माङ् माने । ङ इत् । इत्वं मिमीते मिमाते मिमते ॥ टुडुभृञ् धारणपोषणयोः ॥ टुडुञ इतः इत्वं । बिभर्ति बिभृतः बिभ्रति ॥ णिजृञ् शौचपोषणयोः ॥ ऋञावितौ ॥

**निजामेत्** २९८ ॥ निजादीनां द्विर्भावे पूर्वस्याच्च एद्भवति । नेनेक्ति नेनिक्तः नेनिजति । जुसादौ ह्युक्तेरित्येङरौ न भवतः अनेनिजुरित्यादि । विजृञ् पृथग्भावे । वेवेक्ति विषॄञ् व्याप्तौ । वेवेष्टि ।

अथ दिवादिः ॥ त्रसै उद्वेजने । ऐदित् ॥

**भ्राशभ्लाशभ्रमिक्रमिक्लमित्रसित्रुटिलषो वा** ॥ २९९ ॥ एभ्यो धातुभ्यः श्लेले कर्त्तरि श्यो वा भवति । पक्षे शप् । त्रस्यति त्रसति । त्रुट्यति त्रुटति । तुदादित्वात् शः । लष्यति लषति । क्राम्यति क्रामति । व्यध ताडने । इक् । विध्यति । शमू दमू उपशमे । ऊदित् ॥

**शमां दीर्घोऽष्टानां** ॥ ३०० ॥ शमादीनामष्टानां शिति दीर्घो भवति । शाम्यति दाम्यति । तमू काङ्क्षायां ॥ ताम्यति । श्रमू तपसि । श्राम्यति । भ्रमू अनवस्थाने । भ्राम्यति । भ्रमति । क्षमू सहने । क्षाम्यति । क्लमू ग्लाने । क्लाम्यति । मदै हर्षे । माद्यति ॥

**यसोऽनुपसर्गात्** ॥ ३०१ ॥ अनुपसर्गाद्यसः कर्तरि श्लेले परे श्यो वा-भवति । यसू प्रयत्ने । यस्यति यसति वा ॥

**एन्मिदोऽकः** ॥ ३०२ ॥ मिदोऽकः शित्येद्भवति । ञिमिदा स्नेहने ॥ ञिदाचेतौ । मेद्यति । जॄष् झॄ वयोहानौ ॥ ष इत् ॥ इर् दीर्घः । जीर्यति । शो तनूकरणे ॥

**ओतः श्ये** ॥ ३०३ ॥ ओतः श्ये लुग् भवति । श्यति ॥ छो छेदने । छ्यति । षो अन्तकर्मणि । स्यति । दो अवखण्डने । द्यति । जनैङ् प्रादुर्भावे । ऐङावितौ ॥

**ज्ञाजनो जाः** ॥ ३०४ ॥ ज्ञाजनोः शिति जा भवति । जायते । रञ्जी रागे । ईदित् ॥

**हलो नोऽनर्चाञ्च्युदितोः** ॥ ३०५ ॥ हलन्तस्य धातोरुपान्त्यस्य नस्य किति ङिति च प्रत्यये लुग् भवति नार्चायामञ्चेः उदितश्च । रज्यति रज्यते ॥ अथ स्वादिः ॥ आप्लृ व्याप्तौ ॥ लृदित् । संयोगपरत्वादुतो यञ् लुक् च न

भवति । आप्नोति आप्नुतः आप्नुवन्ति । इत्यादि । लेटि । मध्यमपुरुषे आप्नुहि शेषं सुगमम् ॥

अथ क्र्यादिः ॥ पूञ् पवने । ञ इत् । क्र्यादित्वात् श्नायां ॥

**प्वां ह्रस्वः** ॥ ३०६ ॥ प्वादीनां शिति ह्रस्वो भवति । पुनाति पुनीते ॥ लूञ् छेदने । लुनाति लुनीते । धूञ् कम्पने । धुनाति धुनीते । स्तॄञ् छादने । स्तृणाति स्तृणीते ॥ कॄञ् हिंसायां । कृणाति कृणीते इत्यादि । ज्या वयोहानौ ॥ वशीति यञ इक् । जिनाति । ज्ञा अवबोधने । जानाति जानीते । क्षुभ सञ्चलने ॥ अन्तक्षुभ्नादीनाम् इति णत्वाभावः । क्षुभ्नाति ॥

अथ तुदादिः ॥ भ्रस्जी पाके । तुदादित्वात् शः ॥ वशिव्यचीति यञ इक् श्चुत्वजश्त्वे । भृज्जति भृज्जते । लिपी उपदेहे । लिपादीति नम् । नः परस्वोऽनुनासिकः । लिम्पति लिम्पते । क्षि निवासगत्योः । इय् । क्षियति । कॄ विक्षेपे । इर् किरति । गॄ निगरणे । इर् ॥

**ग्रोऽचि** ॥ ३०७ ॥ ग्रो रस्याजादौ प्रत्यये लो वा भवति । गिरति । गिलति । दृङ् आदरे । ङित् । रीयौ । आद्रियते । प्रछ ज्ञीप्सायाम् । अदित् । वशीति यञ इक् । द्वित्वं पृच्छति ॥ ओव्रस्चौ छेदने । ओदौताविती । वशिव्यचीतीक् श्चुत्वं वृश्चति । इषू इच्छायाम् । ऊदित् । यङ्गमिति षस्य छः । द्वित्वम् इच्छति । णू स्तवने । णो नः । उव् । नुवति । ष्वन्जि सङ्गे । इदित् । तङ् । हलो न इति न्लुक् षस्सः । स्वजते ।

अथ रुधादिः ॥ तृह हिसु हिंसायाम् । अदित् । रुधादित्वान्नम् ॥

**तृणेह्** ॥ ३०८ ॥ तृहः अक्ङिति हलादौ ल्यलौ तृणेहिति निपात्यते । हो ढः अध इति तो धः ष्टुत्वं ढे ढलुक् तृणेढि तृण्ढः तृंहन्ति इत्यादि ॥

अथ चुरादिः । लड उपसेवायाम् ॥ अदित् । णिजादिः ॥

**डश्चर्फिडादीनाम्** ॥ ३०९ ॥ ऋफिडादीनां डस्य रस्य च लो भवति। लालयति । भू क्रृपो अवकल्पने । भावयति क्रृपेररि । ऋफिडादित्वाल्लः । कल्पयति । कथ वाक्यप्रबन्धे । अदित् चुरादित्वाण्णिच् ॥

**कथादिपातिस्फायोऽग्लग्वं** ॥ ३१० ॥ कथादेर्णौ अग् भवति पातेर्लक् स्फायो वम् । कित् अत इति लुक् ञ्णित्यात्वे प्राप्ते ॥

**परेऽचः प्राचोऽक्विदीर्घयद्व्यासदस्क्लुग्विधौ** ॥ ३११ ॥ अजादेशः परनिमित्तकः ततः पूर्वविधौ कर्तव्ये स्थानीव भवति न क्विदीर्घयद्वित्वविधौ संयोगस्यादिस्कोर्लुग्वर्जितासदधिकारपर्यन्तविधौ च । इति स्थानिवद् भावत्वादनुपान्त्यत्वेन अत आन्न भवति कथयति एवं कथादिगणः ॥ मृगि अन्वेषणे । इदित् कथादित्वादकि अत इति लुक् लुग्घेतौ णौ नार् । मृगयते । अथ युजादिः । ली द्रवीकरणे । णिचि ॥

**लीलो नग्लक् स्नेहद्रवे** ॥ ३१२ ॥ लीलयोर्णिचि नग्लकौ भवतः स्नेहद्रवे । अकावितौ । विलीनयति ॥ धूञ् कम्पने । ञ इत् । णिच् ॥

**प्रीञ्धूञोर्नक्** ॥ ३१३ ॥ प्रीञ्धूञोर्णौ नग् भवति । अकावितौ । धूनयति प्रीणयति ॥

कर्मभावयोर्यक् । अल्लुगादि गोपाय्यते गुप्यते इत्यादि बुध्यते पीयते घ्रायते ध्मायते स्थीयते म्नायते दीयते । दैब् शोधने । ब इत् ॥

**एचोऽश्वाः** ॥ ३१४ ॥ धातोरेच अश्याद् भवति । दायते । दश्यते ॥

**यञ्यक्क्याश्शे** ॥ ३१५ ॥ हल्द्वयात्परस्य ऋतोऽर्त्तेश्च यञ्यक्क्याश्शेषु अर्भवति । अर्यते ॥ खनूञ् अवदरणे । ऊञावितौ ॥

**ये वा** ॥ ३१६ ॥ जन्सन्खनां क्ङिति ये आद्वा भवति । खायते खन्यते ॥ अथ अदादिः । हन्यते । अस्तेर्भूः । भूयते उच्यते सुप्यते ॥

**जागुः किति** ॥ ३१७ ॥ जागर्त्तेः ऋतः किति अब्भवति । जागर्यते ॥

**अस्मनुणण्वने** ॥ ३१८ ॥ दरिद्रातेर्ल्यक्ष्लि प्रत्यये लुग् भवति न सादौ सनि उणि ण्वौ अनटि च । दरिद्यते शिष्यते उश्यते नूयते ईयते यायते मीयते ॥

**चक्षः ख्शाञ् वाचि** ॥ ३१९ ॥ वाचि वर्तमानस्य चक्षः ल्यक्ष्लि प्रत्यये ख्शाञ् भवति ॥

**शो यः** ॥ ३२० ॥ ख्शाञादेशस्य शस्य यो वा भवति । व्याख्यायते । चर्त्वं व्याक्शायते शिङ्यते ॥ अथ ह्वादिः । हीयते मीयते भ्रियते ॥

अथ दिवादिः । विद्यते जीर्यते सीयते दीयते दीर्घः जायते जन्यते नलुक् । रज्यते । स्तॄञ् आच्छादने । स्तीर्यते ॥

अथ क्र्यादिः । पूर्यते जीयते ज्ञायते बध्यते ॥ अथ तुदादिः । भृज्ज्यते विलिप्यते । क्षि निवासगत्योः ॥ क्षीयते कीर्यते गीर्यते आद्रियते पृच्छ्यते वृश्च्यते इष्यते गूर्यते व्याप्रियते स्वज्यते ॥ अथ तनादिः । सायते सन्यते । अथ रुधादिः । रुध्यते । भिद्यते । छिद्यते । अथ चुरादिः । कथ्यते मृग्यते । अथ युजादिः ॥ धून्यते प्रीण्यते ॥ इति भावकर्मप्रकरणं समाप्तं ॥

लिङि गोपाय्यात् गोपाय्यास्ताम् । इत्यादि । गुप्यात् गुप्यास्तामित्यादि कामयिषीष्ट कमिषीष्ट ऋतीयिषीष्ट ऋत्यात् चिकित्स्यात् तितिक्षिषीष्ट जुगुप्सिसीष्ट शीशांसिसीष्ट शीशांस्यात् । मुदि हर्षे । इव्यसादित्वादकित्त्वेन एङ् । मोदिषीष्ट । हदि पुरीषोत्सर्गे । अक्षुन्विति नेट् हत्सीष्ट । त्रपौषि लज्जायाम् । औदित्त्वाद्वेट् । त्रपिषीष्ट त्रप्सीष्ट । क्षमौषि सहने । क्षमिषीष्ट क्षंसीष्ट ॥ ऊहि तर्के ॥

**उपसर्गादुदूहः** ॥ ३२१ ॥ उपसर्गादूहेरिकः क्ङिति यादौ प्रत्यये उद्भवति । अभ्युह्यात् अभ्यूहिषीष्ट । गाहौङ् विलोडने । औदित्त्वाद्वेट् । गाहिषीष्ट इडभावे ढत्वादि घाक्षीष्ट । स्मिङ् ईषद्धसने । अजन्तत्वान्नेट् ।

स्मेषीष्ट । श्यैङ् गतौ । एचोऽश्या इत्यात् श्यासीष्ट । धृङ् अविध्वंसने । उरिति किद्वत्त्वान्नार् । धृषीष्ट । पूङ् पवने । अश्विश्रीतीड्निषेधाभावादिट् । पविषीष्ट । डीङ् विहायसां गतौ । डयिषीष्ट । स्रन्सूङ् भ्रन्सूङ् अवस्रंसने । लिङ्ङ्ङित्त्वान्न न्लुक् । स्रंसिषीष्ट भ्रंसिषीष्ट । स्यन्दौङ् स्रवणे । स्यन्दिषीष्ट स्यंत्सीष्ट । कृपौङ् सामर्थ्ये । कल्पिषीष्ट । क्लृप्सीष्ट । स्मृ आध्याने । यङ्ङ्क्येङर् स्मर्यात् । दॄ भये । इर् । दीर्यात् । श्रा पाके ॥

**हल्भ्यां लिङ्येद्वा** ॥ ३२२ ॥ धातोर्हल्द्वयादातः क्ङिति लिङि एद्वा भवति । श्रायात् श्रेयात् । रमि क्रीडायां ॥

**रयनगान्मः** ॥ ३२३ ॥ रादिपूर्वान्मान्तादेकाचो धातोर्वलादेरिड् न भवति । रंसीष्ट । बुधी बोधने ॥ बुध्यात् । बन्नासेति नेट् । भुत्सीष्ट । धृ स्थैर्ये च । रिः ध्रियात् । जि ज्रि अभिभवे ॥ दीर्घः । जीयात् । धेट् पा पाने । आत्वे । वुत्वादेत् । धेयात् पेयात् । हल्द्वयात् परत्वाद्वैत् । घ्रायात् घ्रेयात् ध्मायात् ध्मेयात् घुमेति नित्यमेत् षत्वनिवृत्तौ ष्टुत्वनिवृत्तिः स्थेयात् म्नायात् म्नेयात् देयात् । दैब् शोधने । आत्वम् अवुत्वान्नैत् । दायात् । ग्लायात् ग्लेयात् म्लायात् म्लेयात् द्रै स्वप्ने । द्रायात् द्रेयात् । कै गै रै शब्दे ॥ गेयात् । ऋ प्रापणे च । यङ्ङ्क्यारश इत्यर् ॥ अर्यात् ऋम्यात् ॥

**क्रमः** ॥ ३२४ ॥ क्रमस्तङानयोर्वलादेरिड् न भवति । क्रंसीष्ट । गम्यात् ॥

**गमः** ॥ ३२५ ॥ गमस्सादेर्वलादेरिड् वा भवति ॥

**गंस्नोरसुप्तङाने** ॥ ३२६ ॥ गम्स्नुभ्यां परस्य वलादेरसुब्धातुसम्बन्धिनोस्तङानयोरिड् न भवति । सम्पूर्वत्वे । सङ्गंसीष्ट ॥

**गमो वा** ॥ ३२७ ॥ गमस्तङि सादौ सिलौ किद्वद्वा भवति । हन्मन्येति मलुक् । सङ्गसीष्ट । दश्यात् । दश्यात् । टु ओ श्वि गतिवृद्ध्योः ॥ श्व्यादीतीक् । शूयात् ॥ वस निवासे ॥ उष्यात् । वद व्यक्तायां वाचि । उद्यात् । यजी देव-

पूजासङ्गतकरणदानेषु । इज्यात् ॥ भ्रस्मस्त्विति नेट् । यक्षीष्ट ॥ टुवपी बीज-सन्ताने । उप्यात् ॥

**आवलिलुचिक्कुसृस्वतिशतात् पः** ॥ ३२८ ॥ आवादिपूर्वात् पान्ता-देकाचो धातोर्वलादेरिड् न भवति । वप्सीष्ट । वही प्रापणे । उह्यात् । वनेति नेट् । ढलादि । वक्षीष्ट । वेञ् तन्तुसन्ताने । ऊयात् वासीष्ट । व्येञ् संवरणे । वीयात् व्यासीष्ट । ह्वेञ् स्पर्धशब्दयोः । हूयात् ह्वासीष्ट । भजी सेवायां । भज्यात् भक्षीष्ट रज्यात् ॥

**रभसस्वान् न्जः** ॥ ३२९ ॥ रादिपूर्वान्न्जान्तादेकाचो धातोर्वलादेरिड् भवति । रङ्क्षीष्ट । शपी आक्रोशे । शप्यात् शप्सीष्ट । गुहौञ् संवरणे । गुह्यात् गूहिषीष्ट घुक्षीष्ट । श्रिञ् सेवायां । श्रीयात् श्रयिषीष्ट नीयात् नेषीष्ट ॥

अथ अदादिः ॥ विद्यात् ॥

**लिङि च** ॥ ३३० ॥ हनो लुङि लिङि च वधो भवति । वध्यात् ॥ अश्विश्रीतीट् । आवधिषीष्ट । अस्तेर्भूः । भूयात् मृज्यात् उच्यात् रुद्यात् सुप्यात् अन्यात् । श्वस्यात् । जक्ष्यात् । जागुः कितील्यर् जागर्यात् अस्सन्नुण्वन इत्यातो लुक् । दरिद्र्यात् चकास्यात् शिष्यात् उश्यात् रूयात् । अश्विश्रीतीट् । संक्ष-विषीष्ट स्नूयात् ईयात् सम्पूर्वत्वे ॥

**ख्येतेरित्** ॥ ३३१ ॥ उपसर्गादिणः क्ङिति यादौ लादेशे इद् भवति । दीर्घापवादः समियात् । पा रक्षणे । पायात् । मा माने । मेयात् ख्यासीष्ट चक्षिशीष्ट ईशिषीष्ट । षूङौ प्राणिगर्भविमोचने । सोषीष्ट सविषीष्टि अध्ये-षीष्ट द्विष्यात् ॥

**श्रिगुद्दिलिह्कपिवितुदोः षः** ॥ ३३२ ॥ श्यादिपूर्वात् षान्तादेकाचो धातोर्वलादेरिड् न भवति । द्विक्षीष्ट । दुही प्रपूरणे । दुह्यात् धुक्षीष्ट । दिह्यात् धिक्षीष्ट । लिह्यात् लिक्षीष्ट । ऊर्णुञ् आच्छादने । अनेकाच्त्वादिट् ॥

**वोर्णोः** ॥ ३३३ ॥ ऊर्णोतेरिडादौ ङिद्वद् वा भवति । उव् ऊर्णुविषीष्ट । ऊर्णविषीष्ट । अथ क्र्यादिः ॥ अर्यात् हेयात् निज्यात् भ्रस्मस्त्रिति नेट् निक्षीष्ट विष्यात् । शिशुद्वीति नेट् विक्षीष्ट । अथ दिवादिः । व्यध ताडने । वशि व्यचीति यञ इक् । विध्यात् सेयात् देयात् जनिषीष्ट । पदि गतौ । अक्षुन्विति नेट् । पत्सीष्ट । विदि सत्तायां । शक्प्रच्छीति नेट् वित्सीष्ट । खिदि दैन्ये । खित्सीष्ट । युधि सम्प्रहारे । बन्नासेति नेट् युत्सीष्ट । बुधि मनि ज्ञाने । भुत्सीष्ट ॥

**खिद्यन्सिधिश्लिषिपुषः श्यात्** ॥ ३३४ ॥ खिदादिभ्यः श्यविकरणेभ्यो वलादेरिड् न भवति । मंसीष्ट । डीङ् गतौ । डयिषीष्ट ॥ अथ स्वादिः ॥ स्तृञ् आच्छादने । यङ्यक्यारशे इत्यर् । स्तर्यात् । हल्भ्यां चोरिति वेट् स्तरिषीष्ट स्तृषीष्ट । क्रियात् कृषीष्ट । वृञ् वरणे । व्रियात् वृषीष्ट वरिषीष्ट । धूञ् कम्पने । धूयात् रधादीति वेट् धविषीष्ट धोषीष्ट ॥ अथ क्र्यादिः । पूङ् पवने । पूयात् अश्विश्रीतीट् पविषीष्ट । स्तॄञ् छादने । स्तीर्यात् । हल्भ्यां चोरिति वेट् स्तरिषीष्ट । इडभावे उरिति किद्वत्त्वादिर् स्तीर्षीष्ट । वृञ् वरणे । व्रियात् वरिषीष्ट वृषीष्ट । ज्या वयोहानौ । इक् । जीयात् । ज्ञायात् ज्ञेयात् ॥ अथ तुदादिः । दिशी अतिसर्जने । दिश्यात् ॥

**दन्दृलिविस्पृम्दिरुक्रुरेः शः** ॥ ३३५ ॥ दनादिपूर्वात् शान्तात् एकाचो धातोर्वलादेरिड् न भवति । दिक्षीष्ट वशिव्यचीतीक् । भृज्ज्यात् भ्रस्मस्त्रिति नेट् । भ्रक्षीष्ट । प्रच्छ ज्ञीप्सायाम् । इक् पृच्छयात् शक्प्रच्छीति नेट् पृक्षीष्ट । विश प्रवेशने । विश्यात् । निपूर्वत्वे दन्दलीतीड् न भवति । निविक्षीष्ट वृश्च्यात् । व्यच व्याजीकरणे । इक् । विच्यात् । कुङ् कूङ् शब्दे ॥

**गाङ्कुटाङ्किद्वदञ्णि** ॥ ३३६ ॥ गाङादेशस्य कुटादीनां च अञ्णिति प्रत्यये ङिद्वद् भवति । कुषीष्ट इत्युव् कुविषीष्ट । गुरैङ् उद्यमने । गुरिषीष्ट । ओविजैङ् भयचलनयोः । विजिषीष्ट । रभि राभस्ये ॥

**यरलाद् भः** ॥३३७॥ यादिपूर्वाद् भान्तादेकाचो धातोर्वलादेरिड् न भवति । रप्सीष्ट । डुलभिष् प्राप्तौ । लप्सीष्ट ॥ अथ तनादिः ॥ क्षणिषीष्ट अथ रुधादिः । विदि विचारणे । शक्प्रच्छीति नेट् । वित्सीष्ट । अथ चुरादिः । स्फोव्यात् युषीष्ट ॥ अथ युजादिः । मृषी तितिक्षायां । मृष्यात् मर्षिषीष्ट । तपी दाहे । तप्यात् तप्सीष्ट । धून् कम्पने । धून्यात् णिजभावपक्षे धूयात् । रधादीति वेट् धविषीष्ट धोषीष्ट । प्रीञ् तर्पणे । प्रीण्यात् प्रीयात् प्रेषीष्ट ॥

लिटि । स्पर्धि सङ्घर्षे । द्विः ॥

**लुक् खयि** ॥ ३३८ ॥ द्विर्भावे पूर्वस्य खयि परे पूर्वहलो लुग् भवति । शेषं प्राग्वत् पस्पर्द्धे । बाधृङ् लोटने । बबाधे । अञ्झटिति नैत् ददढे जहदे । ष्वदि ष्वर्दि स्वादि आस्वादने । नैत् । सस्वदे । अकुङ् लक्षणे । उदित इति नम् नक् आनङ्के । ऋजि गतिस्थानार्जनोर्जनेषु । आनृजे । त्रपौषि लज्जायां । त्रप्फलील्येत् त्रेपे पनायाञ्चकार पेने पणायाञ्चकार पेणे कामयाञ्चक्रे चकमे । अयि गतौ । अयाञ्चक्रे । दयि दानगतिहिंसादानरक्षणेषु ॥ दयाञ्चक्रे ऊयांचक्रे । ईक्षि दर्शने । ईक्षांचक्रे । कासृङ् शब्दकुत्सायां ॥ कासांचक्रे । देङ् रक्षणे ॥

**देर्लिटीगिः** ॥ ३३९ ॥ देङोऽचो लिटि इगिर्भवति न च द्विः । दिग्ये दिग्याते दिग्यिरे । स्रन्सूङ् प्रमादे । असंयोगादित्यकित्त्वान्न नलुक् सस्रंसे । द्युति दीप्तौ ॥

**द्युतेरिः** ॥ ३४० ॥ द्युतेर्द्विर्भावे पूर्वस्योतः इद् भवति । दिद्युते ॥ व्यथिष् भयचलनयोः । भूव्यथेति इत् विव्यथे । नट अवस्पन्दने । ननाट । त्रप्फलील्येत । नेटतुः नेटुः इत्यादि ॥

**हल्भ्यामृदन्तेः** ॥ ३४१ ॥ हल्द्वयादृदन्तस्य अर्त्तेश्च लिट्यभर्वति । सस्मार सस्मरतुः सस्मरुः सस्मरिथ सस्मर्थ इत्यादि । श्रा पाके । शश्रौ शश्रतुः शश्रुः । नित्यानिट्तास इति वेट् शश्राथ शश्रिथेत्यादि । फण गतौ ॥

**फणादिजॄत्रस्भ्रम्वमां वा** ॥ ३४२ ॥ फणादेर्ज्रादेश्चाच एद्वा भवति। इडादावपिति च लिटि परे न च द्विः । पफाण फेणतुः पफणतुः फेणुः पफणुरित्यादि। स्वन शब्दे। सस्वान। स्वेनतुः सस्वनतुः। राजृञ् दीप्तौ। रराज रेजतुः रराजतुः। रेजे रराजे रेजाते रराजाते। भ्राजि दीप्तौ। भ्रेजे बभ्राजे इति फणादिः। टुवमू उद्गरणे। फणादीति वैत्। ववाम वेमतुः ववमतुः ॥

**जेर्गिट्सनि** ॥ ३४३ ॥ जेर्लिट्सनोः द्विर्भावे पूर्वात्परस्य जस्य कुर्भवति। जिगाय जिग्यतुः जिग्युः विजिग्ये। धेटः। आत्यौश्। दधौ दधतुः दधुः। पपौ। हल्भ्यामित्यर्। आर आरतुः आरुः। तॄ प्लवनतरणयोः॥ त्रप्फलीत्येत्। ततार तेरतुः। ऋतीयांचक्रे आनर्त्त आनृततुः आनृतुः। चिकित्सांचकार चिकेत। असंयोगादित्यकित्त्वान्न नलुक्। ससञ्ज। ससञ्जतुः ससञ्जुः। अलत्त्वाद्वेट्। ससङ्क्थ ससञ्जिथ। गोपायांचकार जुगोप। धूपायाञ्चकार। दुधूप। जगाम। अपिति गंहन्नित्यतो लुक्। जग्मतुः जग्मुः। नित्यानिडिति वेट् जगमिथ जगन्थ जग्मथुः जग्म। जगाम जगम जग्मिव जग्मिम। सञ्जग्मे सञ्जग्माते सञ्जग्मिरे। बभ्राम। फणादीति वैत् भ्रेमतुः बभ्रमतुः भ्रेमुः। ईर्ष्याचकार। दल ञिफला विशरणे। ददाल देलतुः। त्रप्फलीत्येत् पफाल फेलतुः। शसू हिंसायाम्। अञ्चटिति नैत् शशास शशसतुः। उषू दाहे। उव् उवोष ऊषतुः ॥

**जागृषसमिन्धोवा** ॥ ३४४ ॥ जाग्रादिभ्यो लिट आम् वा भवति कृभ्वस्लिट् चानुप्रयुज्यते। ओषाञ्चकार ओषाम्बभूव ओषामास। ददर्श ददृशतुः ददृशुः। थे नित्यानिडिति वेट् ॥

**सृज्दृशोऽञ्जल्यकि** ॥ ३४५ ॥ सृजदृशोरकिति जल्यम् भवति। म इत् यत् दद्रष्ठ ददर्शिथ ददृशथुः ददृश ददर्श ददृशिव ददृशिम। संददृशे। अर्ह पूजायाम्। आनर्ह ॥ टु ओश्वि गतिवृद्ध्योः ॥

**लिड्यङि** ॥ ३४६ ॥ श्वेर्लिटि यङि च साचो यञ इग्वा भवति । शुशाव शुशुवतुः शुशुवुः सेट्तास्त्वादिट् शुशविथ इगभावे ॥

**न** ॥ ३४७ ॥ श्वेर्लिड्यङोः परतो द्विर्भावे पूर्वस्य साचो यञ इग् न भवति । शिश्वाय शिश्वियतुः शिश्वियुः शिश्वयिथ । इग्यञ इतीक् । उवास । इकि दीर्घः ऊषतुः ऊषुः शक्प्रच्छीत्यनिट्त्वात् वेट् । उवसिथ उवस्थ । उवाद ऊदतुः ऊदुः उवदिथ । इयाज ईजतुः ईजुः । इयजिथ इयष्ठ ईजे । उवाप ऊपतुः ऊपुः । उवपिथ उवप्थ ऊपे ऊपाते । उवाह ऊहतुः ऊहुः उहविथ । इडभावे । ढत्वधत्वादि ॥

**सहिवहोऽस्यौः** ॥ ३४८ ॥ सहिवहोर्ढ्लुचि पूर्वस्यात ओद् भवति। उवोढ। ऊहे ऊहाते ॥

**वेर्वय्** ॥ ३४९ ॥ वेञो लिटि वय् वा भवति ॥

**न वः** ॥ ३५० ॥ वेञादेशस्य वयो यञः लिटि परे इगादेशो न भवति ॥

**वा** ॥ ३५१ ॥ वेञादेशस्य वयो यञ इग्वा न भवति । पक्षे येन सहेक् उव् । उवाय ऊयतुः ऊयुः ऊवतुः ऊवुः उवयिथ ॥

**य्येच** ॥ ३५२ ॥ वेञः य्ये लिटि च इग् न भवति । आत् ववौ ववतुः ऊये ऊयाते ऊवे ऊवाते ववे ववाते ॥

**व्योऽलिटि** ॥ ३५३ ॥ व्येञ एचः अशि आद्भवति न लिटि । विव्याय । श्व्यादीतीक् । विव्यतुः विव्युः अवृव्यात्तेरितीट् । विव्ययिथ विव्ये विव्याते । ह्वेञ् स्पर्धायां ॥

**ह्वक्ते ह्वः** ॥ ३५४ ॥ द्विरुक्तनिमित्ते प्रत्यये ह्वेञः साचो यञ इग् भवति । जुहाव जुहुवतुः जुहुवुः । जुहविथ जुहोथ । जुहुवे जुहुवाते । भजी सेवायां । बभाज । तॄफलीत्येत् भेजतुः भेजे । संयोगान्तत्वादकित्त्वेन न लुक् ।

ररञ्ज ररञ्जे । चखान । गंहन्निस्यतो लुक् । चख्नतुः चख्नुः चखनिथ चख्ने । दीदांसांचकार दीदांसांचक्रे शीशांसांचकार शीशांसांचक्रे । गुहौञ् संवणे । औदित् जुगूह जुगुहतुः जुगुहुः जुगुहे । शिश्राय शिश्रियतुः शिश्रियै शिश्रियाते प्रत्ययेऽसुधीण इति यञ् । निनाय निन्यतुः निन्ये ॥ अथ अदादिः ॥ विवेद ॥

**विदात् कित्** ॥ ३९५ ॥ वेत्तेर्लिटः किद्वदाम् वा भवति कृभ्वस्लिट् चानुप्रयुज्यते । विदात् किद्वचनादामि स्थानित्वेन लिट्कार्यं द्विर्वचनादि न भवति । विदाञ्चकार ॥

**हिन्नोऽङे कुः पूर्वात्** ॥ ३९६ ॥ हिन्नोर्द्विर्भावे पूर्वस्मात् परस्य कुर्भवति न ङे । जघान गंहन्निस्यतो लुक् । जघ्नतुः जघ्नुः जघनिथ जघन्थ आजघ्ने । अस्तेर्भूरादेशः । बभूव बभूवतुः । ममार्ज ममार्जतुः ममृजतुः ममार्जुः ममृजुः ममार्जिथ । श्व्यादीतीक् । उवाच ऊचतुः ऊचुः उवचिथ उवक्थ । रुरोद सुष्वाप । इक् सुषुपतुः सुषुपुः सुष्वपिथ सुष्वप्थ । आन आनतुः शश्वास शश्वसतुः । जजक्ष जजक्षतुः । जजागार जजागरतुः जजागरुः जजागरिथ ॥

जाग्रुषसमिन्धो वा इति वाम् । जागरांचकार दरिद्रांचकार चकासांचकार ॥ शशास शशासतुः शशासुः शशासिथ । उवाश । वशीतीक् । ऊशतुः ऊशुः । उवशिथ । संचुक्ष्णुवे संचुक्ष्णुवाते । सुस्नाव सुस्नुवतुः । नुनाव नुनुवतुः । इयृ । इयाय ईयतुः ईयुः इययिथ इयेथ । इयाय ॥ वी गतिप्रजनकान्त्यसनखादनेषु ॥ विवाय विव्यतुः । ययौ ॥

**लिटि वा** ॥ ३९७ ॥ चक्षो लिटि ख्शाञ् वा भवति । चख्ये चचक्षे ईराञ्चक्रे ईडाञ्चक्रे आसाञ्चक्रे । वसि आच्छादने । ववसे । आङः शसूङ् इच्छायाम् । आशशासे । षूङौ प्राणिगर्भविमोचने । सुषुवे । इङ् अध्ययने ॥

**गाङ् लिटि** ॥ ३९८ ॥ इङो लिटि गाङ् भवति । ङित् । अधिजगे । अनृच्छूर्णोरिति नाम् । ऊर्णुनाव ऊर्णुनुवतुः ऊर्णुनुवे तुष्टाव तुष्टुवतुः तुष्टुवुः

स्नादित्वान्नेट् । तुष्टोथ तुष्टुवे । अथ क्र्यादिः ॥ भ्रीह्रीति वा श्लुवत् आम् विदात् किदिति नियमादन्येभ्योऽकित्त्वादेङरः । बिभयांचकार बिभाय । ह्रीलज्जायां । जिह्रयाञ्चकार जिह्राय पपार आर जहौ ममे बिभराञ्चकार विभरां चक्रे वभार स्नादित्वान्नेट् बभर्थ बभ्रे डुदाञ् दाने । ददौ ददे । अथ दिवादिः । त्रसै उद्वेजने । फणादीति वैत् । तत्रास तत्रसतुः त्रेसतुः । राध वृद्धावेव ॥

**लिटीडप्येत्** ॥ ३५९ ॥ वधार्थे राधोऽच इडादावपिति च लिटि एद्भवति न च द्विः । अपरराध अपरेधतुः अपरेधुः अपरेधिथ । अन्यत्र आरराध अरराधतुः । विव्याध । वशीतीक् । विविधतुः । उच समवाये । पिस्पुव् । उवोच दीर्घः । ऊचतुः । रध हिंसासंराद्ध्योः ॥

**रधः** ॥ ३६० ॥ रधोऽजादौ प्रत्यये नम् भवति । ररन्ध ररन्धतुः इत्यादि । जजार । स्कृच्छृत इत्यर् । फणादीति वैत् । जेरतुः जजरतुः शशौ । गंहन्नित्यतो लुक् श्वुवं जज्ञे पेदे । प्रीङ् प्रीतौ । अतत्संयोगादिति यत्रभावे इय् । पिप्रिये ॥ अथ स्वादिः । स्तृञ् च्छादने । हल्भ्यामित्यर् । तस्तार तस्तरतुः । तस्तरे । वृञ् वरणे । ववार वव्रतुः वव्रुः वव्रे । धूञ् कम्पने । दुधाव दुधुवतुः दुधुवुः । रधादीति विकल्पितेट्त्वात् थे नित्यमिट् दुधविथ दुधुवे । शुश्राव शुश्रुवतुः शुश्रुवुः स्नादित्वान्नेट् शुश्रोथ । हि गतिवृद्ध्योः । हिन्नोरिति हस्य घः प्रजिघाय । दन्भू दम्भे । ददम्भ ॥

**दन्भः** ॥ ३६१ ॥ दन्भः अपिति लिट्यच एद्भवति न च द्विः न्लुक् च । देभतुः देभुः ॥

**थे वा** ॥ ३६२ ॥ दन्भस्थे लिट्येद्वा भवति न च द्विः न्लुक् च । देभिथ ॥ ददम्भिथ । अथ क्र्यादिः ॥ तस्तार । स्कृच्छृत इत्यर् । तस्तरतुः तस्तरुः सेट्त्वान्नित्यमिट् । तस्तरिथ । तस्तरे । चकार चकरतुः । चकरे । शॄ हिंसायां । शशार ॥

**शॄदॄप्रां ह्रिस्वो वा** ॥ ३६३ ॥ शादीनां लिटि ऋद्वा भवति । पक्षे अर् । शशरतुः शश्रतुः । पॄ पालनपूरणयोः । पपार पपरतुः पप्रतुः । भॄ भरणे । बभार बभरतुः बभरुः बभरिथ । दॄ भये । ददार दद्रतुः ददरतुः । ऋ गतौ । आर आरतुः आरुः । जिज्यौ । वशि व्यचीतीक् जिज्यतुः । जज्ञौ जज्ञतुः जज्ञुः । श्रन्थ विमोचनप्रतिहर्षणयोः । शश्रन्थ ॥

**श्रन्थग्रन्थो न्लुक् च** ॥ ३६४ ॥ अनयोरिडादावपिति च लिट्येद्वा भवति न च द्विः न्लुक् च । श्रेथतुः शश्रन्थतुः । ग्रन्थ सन्दर्भे । जग्रन्थ ग्रेथतुः जग्रन्थतुः ॥ अथ तुदादिः ॥

**भ्रस्जस्रसोऽर्** ॥ ३६५ ॥ भ्रस्जो रसः अर्वा भवति न्यश्लि परतः । बभर्ज्ज बभर्ज्जतुः । असंयोगादित्यकित्त्वान्नेक् । बभ्रज्ज बभ्रज्जतुः । बभर्ज्जे बभ्रज्जे । उज्झ उत्सर्गे । उज्झाञ्चकार । एङि इय् । इयेष दीर्घः ईषतुः । व्यच व्याजीकरणे । विव्याच वशीतीक् विविचतुः ॥

**स्वञ्जेर्वा** ॥ ३६६ ॥ स्वञ्जेर्लिटि किद्वद् भवति वा । सस्वञ्जे ॥ अथ रुधादिः ॥ ञि इन्धैङ् दीप्तौ । किद्वत्त्वान्नलुक् । ईधे ईधाते । सम्पूर्वत्वे । जाग्रुषेति वाम् । समिन्धांचक्रे । अन्ज गतिव्यक्तिम्रक्षणेषु ॥ आनञ्ज आनञ्जतुः । णिजन्तानामाम् । प्राग्वत् प्रक्रिया । लुण्टयांचकार इत्यादि सर्वं योज्यं ॥

लुङि अस्पर्धिष्ट अपनायीत् अपनिष्ट अपणायीत् अपणिष्ट औदित्त्वाद्वेट् अक्षमिष्ट अक्षंस्त कंश्रीति ङः । द्वित्वादि । अचकमत । ओप्यायैङ् वृद्धौ ॥

**दीप्पूर्जन्बुधतायप्यायस्ते ञिः** ॥ ३६७ ॥ दीपादिभ्यः कर्त्तरि लुङि ते परे ञिर्वा भवति । ञ इत् । ञेरिति तस्य लुक् पक्षे सिः । अप्यायि अप्यायिष्ट अप्यायिषातां । तायृञ् सन्तानपालनयोः ॥ वा ञिः । अतायि अतायिष्ट । औदित्त्वाद्वेट् अगाढ अघाक्षाताम् अगाहिष्ट अगाहिषातां शक्प्रच्छीति नेट् । अस्मेष्ट अतङि सर्तीत्यङ् । अद्युतत् अद्योतिष्ट अशुभत् अशो-

भिष्ट अरुचत् अरोचिष्ट अश्वितत् अश्वेतिष्ट । अमिदत् । अमेदिष्ट । अक्षिदत् । अक्षेदिष्ट अघुटत् अघोटिष्ट । अलुटत् अलोटिष्ट अलुठत् अलोठिष्ट अक्षुभत् अक्षोभिष्ट । अस्रभत् अस्रम्भिष्ट अस्रसत् अस्रंसिष्ट । अभ्रशत् अभ्रंशिष्ट । अध्वसत् अध्वंसिष्ट । अवृतत् अवर्तिष्ट अवृधत् अवर्धिष्ट अशृधत् अशर्धिष्ट अस्यदत् अस्यन्दिष्ट अकृपत् अकल्पिष्ट । ज्वर रोगे ॥

**वद्व्रज्लोऽतः** ॥ ३६८ ॥ वद्व्रजोर्लरान्तस्य च धातोरतः अतङानपरे सौ आद्भवति । अज्वारीत् । नट नृत्तौ ॥

**वोर्णुञ्हलादेर्लघोरिटि** ॥ ३६९ ॥ ऊर्णुञः हलादिहलन्तस्य च धातोर्लघोरतः इडादावतङानपरे सौ आरैज्वा भवति । अनाटीत् अनाटिष्टाम् अनटीत् अनटिष्टां । कखे हसने । न क्षणिति नारैच् । अकखीत् । ज्वल दीप्तौ ॥ वद्व्रजिति नित्यमात् अज्वालीत् । पत्लृ गतौ । अङि श्वयत्यसिति पम् अमाविती अपप्तत् शक्प्रच्छीति नेट् । अस्माषीत् ॥

**यरंनमातां सक् च** ॥ ३७० ॥ यम्रम्नम्भ्यः आदन्तेभ्यः च परस्य सेरिड् भवति अतङाने परतः सक् चैतेषाम् । ईटीट इति सेर्लुक् अश्रासीत् अश्रासिष्टाम् अरंसीत् अरंस्त । बुधी बोधने । बन्नासेति नेट् ऐच् । अभौत्सीत् अबौद्धां तङि वा ञिः । अबोधि अबुद्ध अभुत्सातां । न क्षणिति नारैच् अवमीत् । सत्तीर्ल्यङ् । असदत् अशदत् ॥ द्रु स्रु गतौ । कंश्रीति ङः । अदुद्रुवत् असुस्रुवत् ॥

**धेट्श्वेर्वा** ॥ ३७१ ॥ धेट्श्विभ्यां कर्त्तरि लुङि ङो वा भवति । ङित्यादिटि चातो लुक् । अदधत् अदधतां ॥

**घाधेट्शाच्छासो वा** ॥ ३७२ ॥ घ्रादिभ्यस्सेरतङाने श्लुग्वा भवति । अश्लुचीट्सकौ । अधात् अधाताम् अधासीत् अधासिष्टां । घुपेति सेः श्लुक् । अपात् अपातां । घ्राधेङिति वा श्लुक् । अघ्रात् अघ्रासीत् अघ्मासीत् । सेः

श्लुक् । अस्थात् आत इत् । प्रास्थित प्रास्थिषाताम् । अघ्रासीत् अदात् । दैब् शोधने ॥ अदासीत् । सृ गतौ । सर्त्तीत्यङ् ॥

**ऋदृशोऽङ्** ॥ ३७३ ॥ ऋवर्णान्तानां दृशेश्चेकः अङ्भर्भवति । असरत् । असरतां ॥

**लिपिसिचह्वार्त्तेः** ॥ ३७४ ॥ लिपादीनां कर्त्तरि लुङ्यतङि अङ् भवति । अर् । आरत् आरतां । सेट्त्वात् सिलुक् अतारीत् अतारिष्टाम् आर्त्तीयिष्ट आर्त्तीत् । ज्युतृ भासने ॥ ऋदित्त्वाद्वाङ् । अज्युतत् अज्योतीत् । ऋदित्त्वाद्वाङ् । अस्कदत् अस्कन्दीत् । व्रज गतौ । वव्रजित्यात् । प्राव्राजीत् । रभसेति नेट् । असाङ्क्षीत् असाङ्क्ताम् । अगोपायीत् अगोपीत् अधूपायीत् अधूपीत् ऌदित्त्वादङ् । अगमत् ॥ णम प्रह्वत्वे शब्दे । यंरमितीट्सकौ । अनंसीत् अनंसिष्टाम् अयंसीत् । न क्षणिति नारैच् । अशासीत् । कृषि विलेखने ॥

**दृपादेर्वाऽसृपः** ॥ ३७५ ॥ दृपादिभ्यो लुङि सिर्वा भवति न सृपः । शिशुद्वित्वीति नेट् ॥

**दृप्दृपृस्कृषिस्पृश्मृशो वा** ॥ ३७६ ॥ दृपादीनामकिति जल्यम् वा भवति । अक्राक्षीत् अकार्क्षीत् । पक्षे ॥

**इकः शलोऽदृशः क्सो नेट् चेत्** ॥ ३७७ ॥ इकः परो यः शल् तदन्ताद्धातोर्लुङि क्सो भवति नेट् चेत् न दृशः । अकृक्षत् । ऋदित्त्वाद्वाङ् । पक्षे सौ सृजदृश इत्यम् । अदर्शत् अद्राक्षीत् अद्राष्टां । दह भस्मीकरणे । दादेरिति हस्य घः । अधाक्षीत् अदाग्धां ॥ मिह सेचने । क्सः । अमिक्षत् ॥ घेट्श्वेर्वेति ङे अशिश्वियत् । पक्षे ॥

**स्तन्भ्रुम्रुचूग्रुचूग्लुचूग्लुचूश्विञोऽङ्** ॥ ३७८ ॥ एतेभ्यः कर्तरि लुङ्यङ् वा भवति । श्वयत्यसिति इतोऽत् अलुक् । अश्वत् । पक्षे सौ न क्षणिति नारैच् । अश्वयीत् । शक्प्रच्छीति नेट् । तस्सीति सस्य तः । अवात्सीत्

अवात्ताम् अवात्सुः । वह्निजिल्यात् । अवादीत् अवाक्षीत् अयष्ट अवाप्सीत् अवप्त अवाक्षीत् । सिलुचि ढलुगोत्वं च अवोढ अवक्षाताम् । अवासीत् अवास्त अव्यासीत् अव्यास्त लिप्सीत्यङ् आतो लुक् आह्वत् ॥

**तङि वा** ॥ ३७९ ॥ लिपादिभ्यः कर्त्तरि लुङि तङि अङ् वा भवति ॥ पक्षे सिः आह्वत आह्वास्त अदीदांसीत् अदीदांसिष्ट अशीशांसीत् अशीशांसिष्ट । ओत ऊत् अगूहीत् अगूहिष्ट । इडभावे । क्सः । अघुक्षत् ॥

**दुहदिहलिहगुहस्तङि तुवि स्लुग्वा** ॥ ३८० ॥ दुहादिभ्यः क्सस्य तवर्गादौ वादौ च तङि श्लुग्वा भवति । अगूढ । अघुक्षत ॥

**क्सस्याचि** ॥ ३८१ ॥ क्सस्याजादौ लुग्भवति । अघुक्षाताम् अघुक्षत । अगूढाः । अघुक्षथाः अघुक्षाथाम् अघूढ्वम् । अघुक्षध्वम् । अघुक्षि अगुह्वहि अघुक्षावहि अघुक्षामहि । कंश्रीति ङः । अशिश्रियत् अशिश्रियत अनैषीत् अनेष्ट ॥ अथ अदादिः । अवेदीत् समवित्त समवित्साताां । लिङि चेति वधादेशः अह्लुचः स्थानित्वादनुपान्त्यत्वे नारैच् । अनेकाच्त्वादिट् च अवधीत् ॥

**घ्नो वधस्तङि लुङि** ॥ ३८२ ॥ हनस्तङि लुङि वधो वा भवति । आवधिष्ट । पक्षे सिः ॥

**घ्नः** ॥ ३८३ ॥ हनस्तङि सादौ सौ किद्वद् भवति । हन्मन्येति न लुक् आहत आहसाताम् अभूत् औदित्त्वाद्वेट् अमार्जीत् अमार्क्षीत् । अङि । श्वयत्यसित्युम् । अवोचत् । ऋदित्वाद्वाङ् अरुदत् अरोदीत् अस्वाप्सीत् अस्वाताम् आनीत् अश्वसीत् अश्वासीत् अजक्षीत् अनेकाच्त्वादिट् अजागरीत् । लुङि ॥

**लुग् दरिद्रः** ॥ ३८४ ॥ दरिद्रो लुङि लुग्वा भवति । पक्षे सक् । अदरिद्रीत् अदरिद्रासीत् अचकासीत् सर्त्तिशास्तीत्यङ् शास इति इत् अशिषत् । वोर्णुञिति वात् । अवशीत् अवाशीत् । रुषट्कत्वादिट् । ऐच् अरावीत् अक्ष्णावीत् समक्ष्णविष्ट अस्नावीत् अनावीत् अयावीत् ॥

**गैत्यो:** ॥ ३८५ ॥ इणिकोर्लुङि गा भवति। घुपेति सेः श्लुक् । अगात् अगाताम् अगुः । अध्यगात् सक् अयासीत् । ख्या प्रकथने । वक्तील्यङ् । आतो लुक् आख्यत् ख्शादेशे अङ् आख्यत ऐरिष्ट ऐडिष्ट ऐशिष्ट आसिष्ट अग्रसिष्ट आशासिष्ट असविष्ट असोष्ट ॥

**लुङ्लृङोर्णौ सन्ङे वा** ॥ ३८६ ॥ इङो लुङ्लृङोः सन्ङपरे णौ च गाङ् वा भवति । गाङ्कुटामिति ङिद्वद्भावे ईहल्यघ्ये इतीत्वे । अध्यगीष्ट पक्षे ऐच् अध्यैष्ट । क्सः । अद्विक्षत् । अद्विक्षत । अधुक्षत् अदुग्ध अधुक्षत अधुक्षाताम् अधुक्षत अदुग्धाः अधुक्षथाः अधुक्षाथाम् अधुग्ध्वम् अधुक्षध्वम् अधुक्षि अदुह्वहि अधुक्षावहि अधुक्षामहि । दिही उपदेहे । अधिक्षत् अदिग्ध अधिक्षत अधिक्षाताम् अधिक्षत अदिग्धाः अधिक्षथाः अधिक्षाथाम् अधिग्ध्वम् अधिक्षध्वम् अधिक्षि अदिह्वहि अधिक्षावहि अधिक्षामहि । लिही आस्वादने । अलिक्षत् अलीढ अलिक्षत अलिक्षाताम् अलिक्षत अलीढाः अलिक्षथाः अलिक्षाथाम् अलीढ्वम् अलिक्षध्वम् अलिक्षि अलिह्वहि अलिक्षावहि अलिक्षामहि । वैच् । प्रौर्णावीत् प्रौर्णवीत् प्रौर्णुवीत् । धूञितीट् । अस्तावीत् अस्तोष्ट ॥

अथ क्र्यादिः । अभैषीत् आरत् तङि वाङ् । समारत । पक्षे सिः समार्ष्ट । अथ दिवादिः । सर्त्तीर्ल्यङ् । पुष पुष्टौ । अपुषत् अशुषत् अतुषत् एवं पुष्यादयः स्निहिपर्यन्ता नेयाः ॥

**श्लिषः** ॥ ३८७ ॥ श्लिषो लुङि क्सो भवति नेट् चेत् । आश्लिक्षत् ॥

**नानालिङ्गने** ॥ ३८८ ॥ अनालिङ्गने वर्त्तमानात् श्लिषः लुङि क्सो न भवति । अङि । उपाश्लिषत् जतु काष्ठम् । असू क्षेपणे । लङ् श्वयत्यसिति थक् । निरास्थत् । निरास्थत । नश अदर्शने । अङ् ॥

**नशो वेम्** ॥ ३८९ ॥ नशोऽङीम् वा भवति। म इत् । अनेशत् अनशत् । तृप प्रीणने । दृपादेर्नेति वा सिः रधादित्वाद्वेट् दृतृपिति वाम् अत्राप्सीत्

अताप्सीत् । इटि । अतर्पीत् पक्षे अङ् । अतृपत् । दृप हर्षविमोहनयोः ॥ अद्राप्सीत् अदाप्सीत् अदृपत् अदर्पीत् । स्तन्भूम्रुचू इति वाङ् । अर् । अजरत् पक्षे सिः । ऋदन्तत्वादिट् । अजारीत् । घ्राधेडिति सेर्वा श्लुक् । अशात् पक्षे सक् अशासीत् । एवम् । अच्छात् अच्छासीत् असात् असासीत् । नित्यं सेः श्लुक् । अदात् दीप्पूरिति वा ञिः ॥

**मजन्वधोऽयंरंनंगंवंकंचमः क्ङ्ञौ** ॥ ३९० ॥ मान्तस्य जनेर्वधेश्च धातोरुपान्त्यस्यातः ञ्णिति कृति ञौ च आत्न भवति न यमादेः । अजनि अजनिष्ट एवमदीपि अदीपिष्ट अपूरि अपूरिष्ट ॥

**पदः** ॥ ३९१ ॥ पदः कर्त्तरि लुङि ते परे ञिर्नित्यं भवति । उदपादि उदपत्सातां दीप्पूरिति वा ञिः अबोधि अबुद्ध अभुत्सातां । स्निग्नितिति नेट् अमंस्त । अश्विश्रीतीट् । अडयिष्ट । शुचृ॑ँ पूतिभावे । ऋदित्त्वादतङ्ङङ् । अशुचत् अशोचिष्ट । हलामित्यात् । अराङ्क्षीत् अरङ्क्त ॥ अथ स्वादिः । धूञि-तीट् । अधावीत् । आप्लृ व्याप्तौ । ऌदित्त्वादङ् आपत् एवम् अशकत् ॥ अथ क्र्यादिः ॥

**निष्कुषः** ॥ ३९२ ॥ निसः कुषेर्वलादेरिड्वा भवति । निरकोषीत् निर-कौक्षीत् अश्विश्रीतीट् अपावीत् अपविष्ट एवम् अलावीत् अलविष्ट ॥ अथ तुदादिः । वार् । अभार्क्षीत् अभार्ष्टाम् अभ्राक्षीत् अभ्राष्टाम् अभर्ष्ट अभ्रष्ट अभर्ड्ढ्वम् अभ्रड्ढ्वम् । दृपादेरिति वा सौ वाम् ॥ अकार्क्षीत् अक्राक्षीत् अकृष्ट अक्रष्ट पक्षे । क्सः । अकृक्षत् अकृक्षत लिप्सिजिल्यङ् । अलिपत् तङि वा इत्यङ् अलिपत । पक्षे सिः अलिप्त । षिची क्षरणे । असिचत् असिचत असिक्त अलुपत् अलुप्त अविदत् अवित्त ऋदन्तत्वादिट् अकारीत् अका-रिष्टां । शक्प्रच्छीति नेट् । अप्राक्षीत् । सृज विसर्गे । सृज्दृश इत्यम् । अस्राक्षीत् । टुमस्जो शुद्धौ । टुशब्दोताविती । नेट् ॥

**नश्मस्जसोर्न्म्** ॥ ३९३ ॥ नशः मस्जेः सस्य च जल्यकिति नम् भवति । अमाविनौ । अमाङ्क्षीत् अमाङ्क्तां । रुजो भङ्गे । ओदित् । अरौ-क्षीत् । छुप स्पृश स्पर्शने । आवलीति नेट् अच्छौप्सीत् । दन्दलीति नेट् दृपा-देरिति वा सिः दृप्तृपिति वाम् अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत् । एवं मृश आमर्शने । अम्राक्षीत् अमार्क्षीत् अमृक्षत् असदत् औदित्त्वाद्वेट् । अव्रश्चीत् अव्रा-क्षीत् । सेट् । इषु गत्याम् । ऐषीत् । यरलाद्भ इति नेट् । अरब्ध अलब्ध ॥ अथ तनादिः ॥ क्षणूञ् हिंसायां । न क्षणिति नात् अक्षणीत् अक्षणिष्टां । थास्तयोस्सेर्वा श्लुक् । हन्मन्येति णलुक् । अक्षत अक्षणिष्ट अक्षथाः अक्ष-णिष्ठाः ॥ अथ रुधादिः । भिदृञ् विदारणे । अक्षुन्विति नेट् ॥ अभैत्सीत् ॥ ऋदन्तत्वाद्वाङ् ॥ अभिदत् अभित्त असेरिति निषेधादिट् । अञ्ज गतिव्यक्ति म्रक्षणेषु ॥ आञ्जीत् आञ्जिष्टाम् । अथ चुरादिः । ण्यन्तेभ्यः । कंश्रीति ङः । अलघुपरत्वान्न दीर्घः । अलुलुण्टत् । अलघुपरत्वादसन्वत्वे नेत् । यतु चूर्ण संकोचने । उदित्त्वान्नम् । अययन्तत् । अञ्रेफौ मुक्ता द्विः । ऊर्ज बलप्राण-नयोः ॥ और्जिजत् । अग्लुच्यसन्वत्त्वान्नेत्वादि । गण सङ्ख्याने ॥

**गणस्ये** ॥ ३९४ ॥ गणेर्ङे द्विर्भावे पूर्वस्य ईद्वा भवति । अजीगणत् अज-गणत् अग्नाशित्वान्न ह्रस्वः । पार तीर कर्मसमाप्तौ ॥ अपपारत् अतितीरत् एवं कथादयः सर्वेऽपि नेतव्याः ॥

लुटि ॥ स्पर्द्धिता मोदिता तितिक्षिता तेजिता त्रप्ता त्रपिता मीमांसिता पनायिता पनिता पणायिता पणिता क्षन्ता क्षमिता गाढा गाहिता स्मेता । कुङ् शब्दे । कोता । गाङ् श्यैङ् गतौ । श्याता धर्त्ता माता पविता डयिता स्यन्ता स्यन्दिता कल्प्ता कल्पिता स्मर्त्ता दरिता दरीता ॥

**सहलुभेच्छरुषरिषस्ति** ॥ ३९५ ॥ सहादिभ्यः तादेर्ल्यश्लः इड्वा भव-ति । सोढा सहिता रन्ता बोद्धा क्रोष्टा रोढा । वा इट ईट् तरिता तरीता ऋती-

**स्थेयप्रकाशने** ॥ ९३६ ॥ स्थेये प्रमाणभूते विषये प्रकाशने च तिष्ठते-र्लस्तङ् भवति । तिष्ठते प्रमेयमकलङ्के । तिष्ठते कन्या छात्रेभ्यः ॥

**प्रतिज्ञाने** ॥ ९३७ ॥ प्रतिज्ञाने अभ्युपगमे तिष्ठतेर्लस्तङ् भवति । सर्व-मनेकान्तात्मकमातिष्ठते जैनः ॥

**समो गिरात्** ॥ ९३८ ॥ प्रतिज्ञाने समो गिरतेर्लस्तङ् भवति । उप-योगलक्षणमात्मानं सङ्गिरते जैनः ॥

**अवात्** ॥ ९३९ ॥ अवाद् गिरतेर्लस्तङ् भवति । अवगिरतेऽन्नं ॥

**संप्रतेर्ज्ञोऽस्मृतौ** ॥ ९४० ॥ संप्रतिभ्यां जानातेर्लस्तङ् भवति न स्मृतौ । सञ्जानीते प्रतिजानीते । स्मृतौ । मातरं सञ्जानाति ॥

**निह्नवे** ॥ ९४१ ॥ निह्नवे अपलापे जानातेर्लस्तङ् भवति । शतमुपजा-नीते । अन्यत्र । चैत्रमुपजानाति ॥

**सनोऽननोः** ॥ ९४२ ॥ सनन्ताज्जानातेर्लस्तङ् भवति नानोः । धर्मं जिज्ञासते । अनोः शिष्यमनुजिज्ञासति ॥

**श्रुवोऽप्रत्याङः** ॥ ९४३ ॥ सनन्तात् श्रृणोतेर्लस्तङ् भवति न प्रत्याङ्-भ्यां । धर्मं शुश्रूषते । प्रत्याङ्भ्यां । तत्त्वं प्रति शुश्रूषति । आशुश्रूषति ॥

**स्मृदृशः** ॥ ९४४ ॥ सनन्ताभ्यां स्मृदृशिभ्यां लस्तङ् भवति । सुस्मू-र्षते दिदृक्षते ॥

**गन्धनावक्षेपसेवासाहसप्रतियत्नप्रकथाव्यये** ॥ ९४५ ॥ गन्धना-दिषु कृञो लस्तङ् भवति । गन्धने सूचने । कार्यमुत्कुरुते । अवक्षेपे । दुर्वृ-त्तानपकुरुते । सेवायां । गणकान् प्रकुरुते । साहसे । परदारान् प्रकुरुते । प्रतियत्ने । एधो दकस्योपस्कुरुते । प्रकथायां । व्याख्यानं प्रकुरुते । व्यये । शतं प्रकुरुते ॥

**प्रसहनेऽधेः** ॥ ९४६ ॥ प्रसहने अभिभवे अधेः कृञो लस्तङ् भवति । चैत्रमधिकुरुते । अन्यत्र । ग्रामे अधिकरोति । स्वामिनं करोतीत्यर्थः ॥

**दीप्तिज्ञानेहाविमत्युपसम्भाषोपमन्त्रणे वदः** ॥ ९४७ ॥ दीप्त्यादिषु वदेः लस्तङ् भवति । दीप्तौ । स्याद्वादे वदते विद्वान् । ज्ञाने । वैद्ये वदते । ईहायां । धर्मे वदते । विमतौ । तत्त्वे विवदते । उपसम्भाषायां । कर्मकरानुपवदते । उपमन्त्रणे । रहसि । वधूमुपवदते ॥

**व्यक्तवाचां सहोक्तौ** ॥ ९४८ ॥ व्यक्तवाचां सहोक्तौ वदेर्लस्तङ् भवति । संवदन्ते जैनाः । व्यक्तवाचामिति किं । सम्प्रवदन्ति कुक्कुटाः ॥

**विप्रलापे वा** ॥ ९४९ ॥ विप्रलापे वदेर्लस्तङ् वा भवति । विप्रवदन्ते विप्रवदन्ति कुतीर्थ्याः ॥

**कर्मण्यसत्यनोः** ॥ ९५० ॥ अनोर्वदेर्लस्तङ् भवति कर्मण्यसति । गुरोरनुवदते शिष्यः । कर्मणि वाद्युक्तमनुवदति ॥

**ज्ञोपस्थः** ॥ ९५१ ॥ कर्मण्यसति जानातेरुपात्तिष्ठतेश्च लस्तङ् भवति । सर्पिषो जानीते । योगी योगे उपतिष्ठते । कर्मणि । स्वरेण पुत्रं जानाति । राजानमुपतिष्ठति ॥

**समोऽर्तिस्वरतिश्रुदृश्विदंप्रच्छृच्छः** ॥ ९५२ ॥ कर्मण्यसति समोऽर्त्यादिभ्यो लस्तङ् भवति । समियृते संस्वरते संशृणुते सम्पश्यते संविते संगच्छते सम्पृच्छते समृच्छते । कर्मणि । रूपं सम्पश्यतीत्यादि ॥

**यङ्घ्नः स्वेऽङ्गे चाङः** ॥ ९५३ ॥ कर्मण्यसति स्वाङ्गे कर्मणि च आङो यमिहनिभ्यां लस्तङ् भवति । आयच्छते आहते । आयच्छते पाणिम् । आहते शिरः । अस्वाङ्गे । आयच्छति रज्जुम् । आहन्ति चोरं ॥

**व्युदस्तपः** ॥ ९५४ ॥ कर्मण्यसति स्वाङ्गे कर्मणि च व्युद्भ्यां तपेर्लस्तङ्

भवति। वितपते उत्तपते राजा। वितपते उत्तपते पाणिम्। अस्वाङ्गे। वितपति भुवं सविता ॥

**न प्राणिन्यणिञो णिञन्तस्य** ॥ ९९५ ॥ अकर्मकादणिञन्तारण्णिञो लस्तङ् न भवति प्राणिनि कर्तरि। आस्ते देवदत्तः आसयति देवदत्तम्। एवं शाययति बालम्। अप्राणीति किं। शोषयते व्रीहीन् ॥

**भीस्म्योः षाकारे** ॥ ९९६ ॥ णिजन्तानां भीष्मिलीनां षाकारयोर्ल-स्तङ् भवति। मुण्डो भीषयते। जटिलो विस्मापयते। श्येनो वर्तिकाम-पलापयते ॥

**गृधिवञ्च्योर्विप्रलम्भे** ॥ ९९७ ॥ विप्रलम्भे गृधिवञ्चिभ्यां णिञो लस्तङ् भवति। माणवकं गर्धयते। माणवकं वञ्चयते। प्रतारयतीत्यर्थः ॥

घेट्पादिति वा तङ् फलेशत्वे। धापयते शिशुं। पाययते आदयते दमयते आयामयते आयासयते परिमोहयते रोचयते नर्तयते वादयते वासयते। चल्य-द्यर्थादिवर्जितेभ्यः। एधयते वेधयते। अफलेशत्वे। धापयतीत्यादि। पदान्तरात् ज्ञाते फलेशत्वे वा तङ्। स्वं पुत्रं धापयते धापयतीत्यादि। चल्यद्यर्थादि-प्रतिषेधः किं। चालयति शाखां। कम्पयति गमयति। आशयति निगारयति भोजयति। अध्यापयति प्रावयति द्रावयति स्रावयति बोधयति योधयति नाशयति जनयति ॥

**यमः समुदाङोऽग्रन्थे** ॥ ९९८ ॥ समुदाङ्भ्यो यमो लस्तङ् भवति फलेशे कर्तरि पदान्तरात् फलेशत्वे ज्ञाते तु वा न ग्रन्थे। संयच्छते व्रीहीन्। उद्यच्छते भारम्। आयच्छते रज्जुम्। अन्यत्र। संयच्छतीत्यादि। अग्रन्थ इति किम्। उद्यच्छति व्याकरणं। व्याकरणविषये उद्योगं करोतीत्यर्थः।

**न पर्याङ्वे रमः** ॥ ९९९ ॥ पर्याङ्विभ्यो रमतेर्लस्तङ् न भवति ॥ परिरमति आरमति विरमति ॥

**उपात्** ॥ ९६० ॥ उपाद्रमेर्लस्तङ् न भवति। उपरमति चैत्रं ॥

**वाऽकर्मकात्** ॥ ९६१ ॥ अकर्मकादुपाद्रमतेर्लस्तङ् वा न भवति । उपरमति उपरमते दोषात् ॥

**व्यादाञोऽपराङ्गे** ॥ ९६२ ॥ व्यादाञो लस्तङ् न भवति अपराङ्गे कर्मणि। व्याददाति मुखं व्याघ्रः । पराङ्गे । व्याददते पिपीलिकाः पतङ्गमुखं ॥

**परानोः कृः** ॥ ९६३ ॥ परानुभ्यां कृञो लस्तङ् न भवति । पराकरोति अनुकरोति ॥

**प्रत्यत्यभेः क्षिपः** ॥ ९६४ ॥ प्रत्यत्यभिभ्यः क्षिपेर्लस्तङ् न भवति । प्रतिक्षिपति अतिक्षिपति अभिक्षिपति ॥

**प्राद्वहः** ॥ ९६५ प्राद्वहेर्लस्तङ् न भवति । प्रवहति ॥

**परेर्मृषेश्च** ॥ ९६६ ॥ परेर्मृषेर्वहेश्च लस्तङ् न भवति । परिमृष्यति । परिवहति ॥

**व्यतिहृतेऽगतिहिंसाशब्दे हृवहश्चापरस्परान्योन्येतरेतरे** ॥ ९६७ ॥ व्यतिहारे गतिहिंसाशब्दार्थवर्जिताद्धातोर्हरतिवहतिभ्यां च लस्तङ् भवति न परस्परादिप्रयोगे । व्यतिभवन्ते ग्रामाः । व्यतिलुनते वृषलाः । सम्प्रहरन्ते राजानः । व्यतिवहन्ते नद्यः । गत्यर्थस्य । व्यतिगच्छन्ति । हिंसार्थस्य । व्यतिघ्नन्ति । शब्दार्थस्य ॥ जल्प रप लप व्यक्तायां वाचि । व्यतिजल्पन्ति । परस्परादिप्रयोगे । व्यतिलुनन्ति परस्परस्य अन्योन्यस्य इतरेतरस्य वा । इति सर्वं योज्यम् ॥

अथ लकारार्था निर्दिश्यन्ते ॥

सतीति वर्तमानार्थे लट् । पचति ॥

**स्मे च लट्** ॥ ९६८ ॥ पुरास्मशब्दयोरुपपदयोर्भूतानद्यतनेऽर्थे लट् भवति । पचतिस्म । पचति पुरा । पुरास्म पचति ॥

**ननौ पृष्टोक्तौ** ॥ ५६९ ॥ पृष्टोक्तौ प्रतिवचने भूतार्थे धातोर्लङ् भवति ननुशब्दे उपपदे । किमकार्षीः देवदत्त । ननु करोमि ॥

**किंवृत्तेऽर्थित्वे** ॥ ५७० ॥ प्रष्टुरर्थित्वे सति किंवृत्ते उपपदे भविष्यति लड्वा भवति । को भवतां भिक्षां ददाति दास्यते । कतमो भवतो भोजयति भोजयिष्यति ॥

**अर्थ्यसिद्धौ** ॥ ५७१ ॥ अर्थ्यस्य दातुः फलसिद्धौ विवक्षितायां भविष्यति लड् वा भवति । यो भक्तं ददाति स स्वर्गं गच्छति । यो भक्तं दास्यति स स्वर्गं गमिष्यति ॥

**लेटि हेतौ** ॥ ५७२ ॥ लेडन्ते उपपदे लेटो लेडन्तार्थस्य हेतौ निमित्ते वर्त्स्यत्यर्थे धातोर्लट् प्रत्ययो वा भवति । उपाध्यायश्चेदागच्छति आगमिष्यति । अथ सूत्रमधीष्व ॥

**लेड् चोर्ध्वमौहूर्तिके** ॥ ५७३ ॥ लेडन्ते उपपदे तद्धेतौ ऊर्ध्वमौहूर्तिके भविष्यति लेड् लट् च वा भवतः । ऊर्ध्वं मुहूर्तादुपाध्यायश्चेदागच्छेत् आगच्छति आगमिष्यति । अथ त्वं सूत्रमधीष्व ॥

**गर्हेऽपिजातोर्लट्** ॥ ५७४ ॥ अपिजात्वोरुपपदयोर्गर्हे गम्यमाने धातोर्लड् भवति । अपि संयतो भवानादाय कृतं सेवते । जातु तत्रभवान् हिनस्ति ॥

**कथमि लेड् च वा** ॥ ५७५ ॥ कथंशब्दे उपपदे गर्हे लट् लेड् च वा भवतः । कथं तत्रभवान् भूतानि हिनस्ति हिंस्यात् हिंसिष्यतीत्यादि ॥ अनद्यतने लङ् ॥ अपचत् ॥

**लङ् च स्मेन** ॥ ५७६ ॥ स्मेन सह माङि उपपदे धातोर्लङ्लुङौ भवतः । मास्म करोत् मास्म कार्षीत् ॥ आशिषि लेट् ॥ पचतु ॥

**इच्छार्थे लेङ्लेट्** ॥ ५७७ ॥ इच्छार्थे धातावुपपदे धातोर्लेङ्लेटौ

भवतः। इच्छामि भुञ्जीत भुङ्क्तां भवान् ॥ विधिनिमन्त्रणेति विध्यादिषु लेङ्लेटौ भवतः ॥ विधौ नियोगे। पचेत् पचतु भवान्। निमन्त्रणे नियमतः कर्तव्ये। सन्ध्यासु भवान् वन्दनां कुर्यात् करोतु। आमन्त्रणे कामचारतः कर्तव्ये। देवदत्त इह भवानासीत आस्ताम्। अधीष्टे सत्कारपूर्वकव्यापारे। भगवान्नः प्रसीदेत् प्रसीदतु। सम्प्रश्ने सम्प्रधारणे। किं नु खलु व्याकरणमधीयीय अध्ययै उत धर्मशास्त्रं। प्रार्थने याञ्चायाम्। अङ्ग पुत्र अधीयीथाः अधीष्व ॥

**प्रैषानुज्ञावसरे लेट्घ्यप्** ॥ ९७८ ॥ प्रैषादिषु धातोर्लेङ्घ्यपौ भवतः। प्रैषे। चैत्रौदनं पच। अनुज्ञायां। साधो वन्दनां कुरु। अवसरे। सम्प्रति सङ्गच्छ ॥

**अधीष्टे** ॥ ९७९ ॥ स्मशब्दे उपपदे अधीष्टे लेङ् भवति। अङ्ग राजन्नणुव्रतानि रक्षस्व ॥

**भृशाभीक्ष्ण्ये लेट् तस्मिन् तथार्थे** ॥ ९८० ॥ भृशाभीक्ष्णयोर्लेङ् भवति तस्मिन्नेव धातौ तथार्थे साधनोपग्रहविशिष्टे उपपदे सति ॥

**भृशादौ हिः** ॥ ९८१ ॥ भृशादौ लेटो हिर्भवति। लुनीहिलुनीहीत्येवं लुनाति लुनीतः लुनन्तीत्यादि। सर्वलकारवचनसाधनस्थानीयं ॥

**प्रचये वा सामान्यार्थे** ॥ ९८२ ॥ सामान्यार्थे धातौ उपपदे प्रचये नानाधात्वर्थसमुच्चये गम्यमाने धातोर्लेङ् वा भवति। व्रीहीन् वप लुनीहि पुनीहि इत्येवं यतते चेष्टते इत्यादि। पक्षे यथासम्भवं लकारो वेदितव्यः ॥

**क्षिप्राशंसार्थे लृङ्लेङ्** ॥ ९८३ ॥ क्षिप्राशंसार्थयोरुपपदयोर्धातोर्यथासङ्ख्यं लृङ्लेङौ भवतः। उपाध्यायश्चेदागच्छति क्षिप्रमध्येष्ये। सम्भावये अधीयीय ॥

**किंवृत्ते लेङ्लृटौ** ॥ ९८४ ॥ किंवृत्ते उपपदे गर्हे लेङ्लृटौ भवतः। किं तत्रभवान् अनृतं ब्रूयात् वक्ष्यति ॥

**अमर्षाश्रद्धेऽन्यत्रापि** ॥९८५॥ किंवृत्ते अकिंवृत्तेऽप्युपपदे अमर्षे अश्रद्धायां लेङ्लृटौ भवतः। न क्षमे नश्रद्दधे किं तत्रभवान् अदत्तं गृह्णीयात् ग्रहीष्यति। न क्षमे न श्रद्दधे तत्रभवान्नाम अदत्तं गृह्णीयात् ग्रहीष्यति ॥

**यद्यदियदाजातौ लेङ्** ॥९८६॥ यदादिषु उपपदेषु अमर्षाश्रद्धयोर्लेङ् भवति। न क्षमे न श्रद्दधे। यत्तत्रभवान् अकल्प्यं सेवेत। यदि गुरुरसत्यं ब्रूयात्। यदा संयतो हिंस्यात्। जातु धर्मः सुखं व्यभिचरेत् ॥

**गर्हे च यच्चयत्रे** ॥९८७॥ यच्चयत्रयोरुपपदयोः गर्हे अमर्षाश्रद्धयोश्च लेङ् भवति। धिग्गर्हा न क्षमे नश्रद्दधे यच्च तत्रभवानाक्रोशेत्। यत्र गुरुरसत्यं ब्रूयात् ॥

**चित्रे** ॥९८८॥ यच्चयत्रयोरुपपदयोश्चित्रे विस्मये लेङ् भवति। चित्रमिदं यच्च तत्रभवान् अकल्प्यं सेवेत। यत्र गुरुं प्रतारयेत् ॥

**बाढेऽप्युते लेङ्** ॥९८९॥ बाढार्थयोरप्युतयोरुपपदयोर्लेङ् भवति। अपि कुर्यात् उत कुर्यात् ॥

**सम्भाव्येऽलम्यर्थात्** ॥९९०॥ सम्भाव्येऽर्थे धातोर्लेङ् भवति अलम्यर्थोक्तौ गम्यमानायाम्। अपि पर्वतं शिरसा भिन्द्यात् ॥

**सतोच्छार्थात्** ॥९९१॥ इच्छार्थाद्धातोस्सति वर्तमाने लेङ् वा भवति। पक्षे लट्। इच्छेत् इच्छति। उश्याद्वष्टि ॥

**वर्त्स्यति फलकारणे** ॥९९२॥ भविष्यति फले कारणे चार्थे वर्तमानाद्धातोर्लेङ् वा भवति। पक्षे लृट्। यदि गुरून् उपासीत उपासिष्यते शास्त्रान्तं गच्छेत् गमिष्यति ॥

**कामाविष्कारेऽकच्चिति** ॥९९३॥ कामाविष्कारे इच्छाप्रकाशने धातो-

र्लेङ् भवति न कच्चित्युपपदे । इच्छामो भुञ्जीत भवान् । कच्चिति । कच्चिज्जीवति ते पिता ॥ विध्यादौ लेङ् प्रागेव दर्शितः ॥

**लेड्यदि** ॥ ५९४ ॥ यदि सति कालवेलासमयेषूपपदेषु अवसरे धातोर्लेङ् भवति । कालो वेला समयो यद् भुञ्जीत भवान् ॥

**तृप्यपू चार्हे** ॥ ५९५ ॥ अर्हे धातोर्लेङ् तृप्यपौ च भवन्ति । भवान् खलु कन्यां विवहेत् ॥

**शक्तौ लेङ्घ्यप्** ॥ ५९६ ॥ शक्तौ गम्यमानायां धातोर्लेङ्घ्यपौ भवतः । भवान् खलु भारं वहेत् ॥ आशिषि लिङ् ॥ पच्यात् ॥ परोक्ष इति लिट् ॥ पपाच किल ॥

**अत्यन्तापह्नवे लिट्** ॥ ५९७ ॥ अत्यन्तापह्नवे सर्वथापलापे भूतानद्यतने लिड् भवति । किं त्वं कलिङ्गेषु स्थितोऽसि । नाहं कलिङ्गान् जगाम ॥ भूते लुङ् ॥ अपाक्षीत् ॥

**माङि लुङ्** ॥ ५९८ ॥ माङ्युपपदे धातोर्लुङ् भवति । अमाङेति नाट् । मा भवान् पाक्षीत् ॥ परिदेवने लुट् ॥ पक्ता ॥ लेङ्निमित्ते इति लृङ् ॥ यद्यपक्ष्यत् तदा अभोक्ष्यत ॥

**वाशेषात्** ॥ ५९९ ॥ लृट् चक्षेषेऽयदाविति सूत्रं यावत् येऽर्था वक्ष्यन्ते तेषु लृङ् वा भवति । कथं नाम तत्रभवान् भूतान् अहिंसिष्यत् । किं तत्रभवान् अनृतमवक्ष्यत् । न क्षमे न श्रद्दधे तत्रभवान् नामादत्तमग्रहीष्यत् । यत्तत्रभवानकल्प्यमसेविष्यत । यत्तत्रभवानाक्रोक्ष्यत् ॥ भविष्यति लृट् ॥ पक्ष्यति ॥

**स्मृत्यर्थेऽयदि लृट्** ॥ ६०० ॥ स्मृत्यर्थे उपपदे भूतानद्यतने लृड् भवति न यदि । अभिजानासि देवदत्त काश्मीरेषु वत्स्यामः । यदि । अभिजानासि देवदत्त यत्कलिङ्गेष्ववसाम ॥

**साकाङ्क्षे वा** ॥६०१॥ साकाङ्क्षे वाक्यान्तरे सति स्मृत्यर्थे उपपदे भूतानद्यतने लृट् वा भवति । स्मरसि देवदत्त काश्मीरेषु वत्स्यामस्तत्र भोजनं च भोक्ष्यामहे । स्मरसि देवदत्त काश्मीरेष्ववसाम तत्रौदनं च अभुञ्ज्महि ॥

**किंकिलास्त्यर्थयोर्लृट्** ॥६०२॥ किंकिलशब्दसमवाये अस्त्यर्थे चोपपदे अमर्षाश्रद्धयोर्धातोर्लृट् भवति । न क्षमे न श्रद्दधे किंकिल नाम तत्रभवानकल्प्यं सेविष्यते । अस्ति नाम तत्र भवानकल्प्यं सेविष्यते ॥

**लृट् शेषेऽयदौ** ॥६०३॥ शेषे यच्चयत्राभ्यामन्यस्मिन् उपपदे चित्रे धातोर्लृट् भवति न यदौ । आश्चर्यं नाम पङ्गुः पर्वतमारोक्ष्यति । यदौ आश्चर्यं यदि पङ्गुः पर्वतमारोहेत् ॥

॥ इति तिङन्तसङ्ग्रहः ॥

जयति जगदीशमस्तक-
मणिकिरणकलापकल्पितार्घ्यविधि ।
जिनचरणकमलयुगलं
गणधरगणनीयनखरकेसरकम् ॥

॥ श्रीरस्तु ॥

## ॥ अथ कृत्संग्रहः ॥

प्रणम्रजनतापुण्यकृतं प्रहतदुष्कृतम् ।
श्रीवर्धमानमाराध्य कृत्संग्रहमहं ब्रुवे ॥

अथ धातुभ्यः कृत्प्रत्ययाः प्रदर्श्यन्ते ॥

**ध्याद्यतिङ् कृत्** ॥ १ ॥ ध्यणादिप्रत्ययरूपं कृत्संज्ञं भवति न तिङ् ॥

**कृद् बहुलं** ॥ २ ॥ कृत्प्रत्ययाः निर्दिष्टे अनिर्दिष्टे चार्थे बहुलं प्रयोगानुसारेण भवन्ति ॥

**ध्यण्** ॥ ३ ॥ धातोर्ध्यण् प्रत्ययो भवति । साप्यानाप्यादिति सकर्मकात् कर्मण्यकर्मकाद् भावे । घणावितौ । अर्हे शक्तौ वा । एध्यं देवदत्तेन । अनुपान्त्यलान्नात आत् । वन्द्यः । खाद्यः । लोचृङ् दर्शने । लोच्यं व्राप्यं पान्यः पाण्यः सेव्यः । शिक्षि विद्योपादाने । शिक्ष्यः आशंस्यः ॥

**जनाप्ल्वापतो ध्यण्** ॥ ४ ॥ जनादिभ्यो ध्यण्प्रत्ययो भवति कर्तरि वा । आल्पाव्योऽयम् आल्पाव्यमनेन आपात्योऽयम् आपात्यमनेन । धार्यं घोल्यं सार्यं तार्यं निगाद्यं नाव्यं । जल्प रप लप व्यक्तायां वाचि । राप्यं लाप्यम् आचार्म्यं वाप्यं ॥

**क्तेऽनिट्चजः कुर्घिति** ॥ ५ ॥ क्तेऽनिटश्चजान्तस्य धातोर्घिति प्रत्यये कुर्भवति । आसन्नः पाक्यं ॥

**ध्यणावश्यके** ॥ ६ ॥ आवश्यके ध्यणि चजोः कुर्न भवति ॥

**लुग्ध्यप्यवश्यमः** ॥ ७ ॥ अवश्यमो ध्यपि लुक् भवति । अवश्यपाच्यं ॥ व्यज हानौ । ध्यणि ॥

**त्यज्यजः** ॥ ८ ॥ त्यज्यजोर्घ्यणि कुर्न भवति । त्याज्यः । अत एव यजो वा घ्यण् । याज्यः । भाग्यः रङ्ग्यः याच्यः हार्यम् । अथादादिः । आद्यं वेद्यं घात्यः ॥

**वाक्यार्घनिदाघावदाघं नाम्नि** ॥ ९ ॥ वाक्यादयो यण्घजन्ता निपात्यन्ते नाम्नि विषये । वाक्यं पदसमुदायः । अन्यत्राकुत्वं । वाच्यं । जागर्यं याव्यम् आशास्यं ॥ दीव्यं बोध्यं । जन्योऽयं । भजन्वध इति नात् । जन्यमनेन कार्यं शार्यं सेक्यं मोक्यं मार्यं ॥

**पाणिसमवात् सृजः** ॥ १० ॥ पाणेः समवाच्च सृजेर्घ्यण् भवति । क्यपोऽपवादः । पाणिना सृज्यत इति पाणिसर्ग्या रज्जुः । स्वक्तास्युक्तमिति समासः समवसर्ग्यं संसृज्यः । अनुणीति अङ्क्त्वादेङ् । कोव्यं । तान्यः मान्यं रोध्यं रेक्यं वेक्यं योग्यं ॥

**निप्राद्युजः शकि** ॥ ११ ॥ निप्राभ्यां युजो घ्यणि कुर्न भवति शक्यर्थे । नियोक्तुं शक्यो नियोज्यः प्रयोज्यः । अन्यत्र । योग्यः प्रयोग्यः ॥

**भुजोऽदौ** ॥ १२ ॥ भुजो घ्यण्यद्यर्थे कुर्न भवति । भोज्यमन्नम् । अन्यत्र । भोग्यो देशः । पाल्यः व्यङ्ग्यः ॥

**वाधारेऽमावस्या** ॥ १३ ॥ आधारे अमावस्येति वा निपात्यते । पक्षे घ्यण् । अमा वसतोऽस्यां तिथौ सूर्याचन्द्रमसौ इति अमावस्या अमावास्या ॥

**प्राक्त्रि प्राप्तोऽसमः** ॥ १४ ॥ स्त्रियां क्तिन्नित्यतः प्राक् यः प्रत्ययो वक्ष्यते स एकस्मिन्नर्थे असरूपो विसदृशः प्राप्तो भवति नापवादी ॥

**तव्यानीयौ** ॥ १५ ॥ धातोस्तव्यानीयौ प्रत्ययौ पर्यायेण भवतः । एधितव्यम् एधनीयं देवदत्तेन । बीभत्सितव्यं बीभत्सनीयं वन्दितव्यो वन्दनीयः हत्तव्यं हदनीयं तितिक्षितव्यं तितिक्षणीयं तेजितव्यं तेजनीयं जुगुप्सितव्यं

जुगुप्सनीयं गोपितव्यं गोपनीयं त्रप्तव्यं त्रपितव्यं त्रपणीयं मीमांसितव्यं मीमांसनीयं पनायितव्यं पनितव्यं पनायनीयं पणायितव्यं पणितव्यं पणायनीयं पणनीयं क्षन्तव्यं क्षमितव्यं क्षमणीयं कामयितव्यं कामनीयं कमितव्यं कमनीयं सेवितव्यं सेवनीयं गाढव्यं गाहितव्यं गाहनीयं स्मेतव्यं स्मयनीयं कोतव्यं कवनीयं धर्तव्यं धरणीयं मातव्यं मानीयं पवितव्यं पवनीयं डयितव्यं डयनीयं वर्तितव्यं तर्तनीयं स्यन्तव्यं स्यन्दितव्यं स्यन्दनीयं कल्प्तव्यं कल्पितव्यं कल्पनीयं स्मर्तव्यं स्मरणीयं सोढव्यं सहितव्यं सहनीयं रन्तव्यं रमणीयं बोद्धव्यं बोधनीयं सत्तव्यं सदनीयं क्रोष्टव्यं क्रोशनीयं रोढव्यं रोहणीयं भवितव्यं भवनीयं स्रोतव्यं स्रवणीयं ॥

**प्रब्रूपस्थोऽनीयः** ॥ १६ ॥ प्रब्रूपस्थाभ्यामनीयः कर्तरि वा भवति। पक्षे कर्मणि। उपस्थातव्यो गुरुः शिष्येण। उपस्थानीयो गुरोश्शिष्यः। उपस्थानीयो गुरुश्शिष्येण। ध्यातव्यं ध्यानीयं तरितव्यं तरीतव्यम् तरणीयम् ऋतीयितव्यम् ऋतीयनीयम् अर्तितव्यम् अर्तनीयं चिकित्सितव्यं चिकित्सनीयं नन्दितव्यं नन्दनीयं सङ्क्तव्यं सञ्जनीयं गोपायितव्यं गोपायनीयं गोप्तव्यं गोपितव्यं गोपनीयं धूपायितव्यं धूपायनीयं धूपितव्यं धूपनीयं गन्तव्यं गमनीयं स्रप्तव्यं सर्तव्यं सर्पणीयं नन्तव्यं नमनीयं यन्तव्यं यमनीयं क्रमितव्यं क्रमणीयं भ्रमितव्यं भ्रमणीयम् अष्टव्यम् अक्षितव्यम् अक्षणीयं द्रष्टव्यं दर्शनीयं श्वयितव्यं श्वयनीयं वस्तव्यं वसनीयं यष्टव्यं यजनीयं वोढव्यं वहनीयं पक्तव्यं पचनीयं रङ्क्तव्यं रञ्जनीयं दीदांसितव्यं दीदांसनीयं शीशांसितव्यं शिशांसनीयं शप्तव्यं शपनीयं गोढव्यं गूहितव्यं गूहनीयं श्रयितव्यं श्रयणीयं हर्तव्यं हरणीयं कर्तव्यं करणीयं नेतव्यं नयनीयम् ॥

अथ अदादिः ॥ अत्तव्यम् अदनीयं वेदितव्यं वेदनीयं हन्तव्यं हननीयं मार्ष्टव्यं मार्जितव्यं मार्जनीयं वक्तव्यं वचनीयं रोदितव्यं रोदनीयं स्वप्तव्यं

स्वपनीयं जागरितव्यं जागरणीयं दरिद्रितव्यं दरिद्रणीयं रवितव्यं रवणीयम् एतव्यम् अयनीयम् ईशितव्यम् ईशनीयं सोतव्यं सवितव्यं सवनीयं शयितव्यं शयनीयं दोग्धव्यं दोहनीयम् ॥

अथ ह्वादिः ॥ होतव्यं हवनीयम् ॥ अथ दिवादिः ॥ देवितव्यं देवनीयं नर्तितव्यं नर्तनीयं शोष्टव्यं शोषणीयं शक्तव्यं शकनीयं शमितव्यं शमनीयं रोष्टव्यं रोषितव्यं रोषणीयं लोब्धव्यं लोभितव्यं लोभनीयं रद्धव्यं रधितव्यं रन्धनीयं नंष्टव्यं नशितव्यं नशनीयं त्रप्तव्यं तर्प्तव्यं तर्पितव्यं तर्पणीयं द्रोग्धव्यं द्रोढव्यं द्रोहितव्यं द्रोहणीयं । बहुलवचनात् कर्तृकरणयोरप्यनीयः ॥ मोहयत्यात्मानं मुह्यत्यनेनात्मेति वा मोहनीयं कर्म । एवं ज्ञानावरणीयादयः । मन्तव्यं मननीयं स्रष्टव्यं सर्जनीयम् ॥ अथ स्वादिः ॥ सोतव्यं सवनीयम् अष्टव्यम् अशितव्यम् अशनीयम् ॥ अथ क्र्यादिः ॥ क्रेतव्यं क्रयणीयं ग्रहीतव्यं ग्रहणीयं ज्ञातव्यं ज्ञानीयं वरितव्यं वरीतव्यं वरणीयम् ॥ अथ तुदादिः ॥ तोत्तव्यं तोदनीयं भ्रष्टव्यं भर्ष्टव्यं भ्रज्जनीयं भर्जनीयं क्रष्टव्यं कर्ष्टव्यं कर्षणीयं कर्तितव्यं कर्तनीयं करितव्यं करीतव्यं करणीयं मङ्क्तव्यं मज्जनीयम् एष्टव्यम् एषितव्यम् एषणीयं कुटितव्यं कुटनीयं कुवितव्यं कुवनीयम् उद्वेजितव्यम् उद्वेजनीयम् आरब्धव्यं रम्भणीयं लब्धव्यम् लम्भनीयम् ॥ अथ तनादिः ॥ तनितव्यं तननीयं मनितव्यं मननीयम् ॥ अथ रुधादिः ॥ रोद्धव्यं रोधनीयं भङ्क्तव्यं भञ्जनीयम् अङ्क्तव्यम् अञ्जितव्यम् अञ्जनीयम् ॥ अथ चुरादिः ॥ चोरयितव्यं चोरणीयं ॥

**प्वच्वत्तकिशक्शसियत्सहियजोऽव्यासुवपरपलपापचपडिपदभचमुर्यः** ॥ १७ ॥ पवर्गान्तादजन्ताच्चतादेश्च धातोर्यो भवति न ण्यादेः ऋवर्णान्ताच्च । घ्यणोऽपवादः । बीभत्स्यं । यतैङ् प्रयत्ने । यत्यं । गोप्यं । लबुङ् अवस्रंसने । लम्ब्यं । वल्भि भोजने । वल्भ्यं । क्षम्यं काम्यं कम्यं स्मेयम् । एङ्वौ । कव्यं ॥

**ये** ॥ १८ ॥ आदन्तस्य यप्रत्यये ईद् भवति । एङ् । मेयं देयं । पव्यं क्षोभ्यं सह्यं वम्यं ॥

**भूगो यो वा** ॥ १९ ॥ भूगाभ्यां यः कर्तरि वा भवति । भव्यो देवदत्तः। भव्यं देवदत्तेन । स्तव्यं जेयं धेयं पेयं घ्रेयं ध्मेयं स्थेयं म्नेयं देयं । गेयं । गेयो गाथानां चैत्रः । गेया गाथा चैत्रेण । देयं गोप्यं धूप्यं तप्यं गम्यं नम्यं क्रम्यं भ्रम्यं शस्यं श्वेयं यज्यं वेयं क्लेयं । चतेङ् याचने ॥ चत्यं शप्यं श्रेयं नेयं ॥ अथ अदादिः ॥ खप्यं दरिद्र्यं रव्यम् आख्येयं सव्यं शेयम् अध्येयम् ऊर्ण-व्यम् ॥ अथ क्लादिः ॥ हव्यं हेयं मेयं धेयम् देयं ॥ अथ दिवादिः ॥ क्षेप्यं शक्यं शम्यं दम्यं तम्यं श्रम्यं क्षम्यं सेयं सव्यम् ॥ अथ स्वादिः ॥ श्रव्यं ॥ क्र्यादिः ॥ क्रेयं प्रेयं लव्यं ज्ञेयं । णू स्तवने । कुटादित्वान्नैङ् । प्रणूयः आरभ्यं लभ्यं ॥

**य्याङः** ॥ २० ॥ आङो लभो यादौ प्रत्यये नम् भवति । आलम्भ्यः क्रोधः ॥

**स्तुतावुपात्** ॥ २१ ॥ उपाल्लभः यादौ प्रत्यये स्तुतौ नम् भवति । उप-लम्भ्यो देवः । अन्यत्र । उपलभ्यं धनं । चौर्यं मृग्यम् इत्यादि ॥

**गन्मद्यमोऽनुपसर्गात्** ॥ २२ ॥ अनुपसर्गेभ्यो गदादिभ्यो यो भवति । गद्यं मद्यं यम्यम् । अनुपसर्गादिति किं । निगाद्यं प्रमाद्यं नियाम्यं ॥

**चरः** ॥ २३ ॥ अनुपसर्गाच्चरो यो भवति । चर्यं व्रतम् । उपसर्गात्स-ञ्चार्योऽक्षः ॥

**आङोऽगुरौ** ॥ २४ ॥ आङश्चरेर्यो भवति न गुरौ । आचर्यो धर्मः । गुरौ । अचार्यः समन्तभद्रः ॥

**पणोपसृव्रवदाद्विक्रेयर्तुमत्युपेयागर्ह्ये** ॥ २५ ॥ पणादिभ्यो यथास-ङ्ख्यं विक्रेयादिष्वर्थेषु यो भवति । पण्यं विक्रेयम् । उपसर्या ऋतुमती । वर्या

उपेया वेश्या । अवद्यं गर्ह्यं पापम् । अन्यत्र । पाण्यो गुरुः । उपसार्यस्साधुः । वृत्या गौः । अवाद्यो जनवादः ॥

**स्वामिवैश्येऽर्तेः** ॥ २६ ॥ अनुपसर्गादर्तेर्यो भवति स्वामिवैश्ययोः । अर्यः स्वामी । अर्यो वैश्यः । अन्यत्र आर्यः ॥

**क्षय्यजय्यौ शक्तौ** ॥ २७ ॥ एतौ यान्तौ शक्तौ निपात्येते । क्षेतुं शक्यः क्षय्यः । जेतुं शक्यः जय्यः ॥

**क्रय्यः क्रयार्थे** ॥ २८ ॥ क्रयविषये क्रय्य इति निपात्यते ॥

**सङ्गतेऽजर्यं** ॥ २९ ॥ सङ्गते विशेष्ये अजर्यमिति कर्तरि निपात्यते । अजर्यं सङ्गतं ॥

**ओरावश्यके** ॥ ३० ॥ उवर्णान्तादावश्यके द्योत्ये घ्यण् भवति । भाव्यम् अवश्यभाव्यं काव्यम् अवश्यकाव्यं पाव्यम् अवश्यपाव्यं लाव्यम् अवश्यलाव्यं साव्यम् अवश्यसाव्यं धाव्यम् अवश्यधाव्यम् ॥

**वदः सुपः क्यप् च** ॥ ३१ ॥ सुबन्तादनुपसर्गाद् वदः क्यप् यश्च भवतः । कपावितौ क्यपीक् । ब्रह्मोद्यं ब्रह्मवद्यं ॥

**हत्याभूयं भावे** ॥ ३२ ॥ सुपोऽनुपसर्गात् हत्या भूयमिति भावे निपात्यते । ब्रह्मणो हननं ब्रह्महत्या । स्त्रियामेव । बन्धोर्भावः बन्धुभूयं । नपुंसक एव ॥

**अग्निचित्या** ॥ ३३ ॥ स्त्रियां भावे इदं निपात्यते । अग्नेश्चयनमग्निचित्या ॥

**खेयमृषोद्यं** ॥ ३४ ॥ खनः क्यपि खेयमिति निपात्यते मृषाद्वदो मृषोद्यमिति । न भावे ॥

**कुप्याज्यभिद्योद्ध्यसिध्यपुष्ययुग्यं नाम्नि** ॥ ३५ ॥ एते नाम्नि क्यबन्ता निपात्यन्ते । कुप्यं धनम् । आज्यं घृतं । भिद्योद्ध्यौ नदौ । सिध्यः पुष्यनक्षत्रं युग्यं यानं ॥

**शास्वृञ्दृजुषस्त्वेत्यृदुपान्त्यादनृचृक्लृप्चृतः** ॥ ३६ ॥ शासादिभ्यः ऋदुपान्त्येभ्यश्च क्यप् भवति न ऋचक्लृप्चृद्भ्यः । शिष्यं ॥

**ह्रस्वस्य तक् पिति कृति** ॥ ३७ ॥ ह्रस्वान्तस्य धातोः पिति कृति तग् भवति । अकावितौ । आवृत्यं जुष्यं स्तुत्यम् इत्यम् अधीत्यं वृत्यं वृध्यं नृत्यं कृत्यं कृष्यमित्यादि । ऋचादेः । अर्च्यं कल्प्यं चर्त्यं ॥

**ग्रहः पदास्वैरिबाह्यापक्ष्ये** ॥ ३८ ॥ पदादिष्वर्थेषु ग्रहः क्यप् भवति । प्रगृह्यं पदं । कर्मगृह्यः आत्मा । कर्मपरतन्त्रः । कुलगृह्या स्त्री । कुलबाह्या । बाह्येति स्त्रीनिर्देशात् न पुंनपुंसकयोः । धर्मगृह्यः साधुः । धर्मपक्ष्यः ॥

**भृञोऽनाम्नि** ॥ ३९ ॥ भृञः क्यप् भवति न नाम्नि । भृत्योऽनुजीवी । भृत्यं कुलं । नाम्नि भार्या वधूः ।

**समो वा** ॥ ४० ॥ समो भृञः क्यप् भवति वा । सम्भृत्यः सम्भार्यः ॥

**कृमृज्वृषशन्सगुहदुहजपः** ॥ ४१ ॥ कादिभ्यो वा क्यप् भवति । कृत्यं कार्यं मृज्यं मार्ग्यं । वृषू सेवने । वृष्यं वर्ष्यं शस्यं शंस्यं गुह्यं गोह्यं दुह्यं दोह्यं जप्यं जाप्यं ।

**रुच्याव्यथ्यौ** ॥ ४२ ॥ एतौ क्यबन्तौ कर्तरि निपात्येते । रोचत इति रुच्यः मोदकः । न व्यथते इति अव्यथ्यश्चैत्रः ॥

**ण्वुतृज्लिहादिभ्यश्च** ॥ ४३ ॥ धातोर्लिहादिभ्यश्च ण्वु तृ अच् प्रत्यया भवन्ति । णचावितौ । चोरकः । एधत इति एधकः एधिता एधः बीभत्सकः बीभत्सिता बीभत्सः वन्दकः वन्दिता वन्दः हादकः हत्ता हदः तितिक्षकः तितिक्षिता तितिक्षः तेजकः तेजिता तेजः जुगुप्सकः जुगुप्सिता जुगुप्सः गोपकः गोपिता गोपः त्रापकः त्रपिता त्रप्ता त्रपः मीमांसकः मीमांसिता मीमांसः पनायकः पनायिता पनायः पानकः पनिता पनः । मजन्वध इति

नात् । क्षमकः क्षन्ता क्षमिता क्षमः कामकः कामयिता कमिता कामः कमः सेवकः सेविता सेवः गाहकः गाढा गाहिता गाहः स्मायकः स्मेता स्मयः कावकः कोता कवः धारकः धर्ता धरः मायकः माता मायः पावकः पविता पवः वर्तकः वर्तिता वर्तः स्यन्दकः स्यन्दिता स्यन्ता स्यन्दः कल्पकः कल्प्ता कल्पिता कल्पः स्मारकः स्मर्ता स्मरः साहकः सोढा सहिता सहः रामकः रन्ता रमः बोधकः बोद्धा बोधः क्रोशकः क्रोष्टा क्रोशः रोहकः रोढा रोहः भावकः भविता भवः स्रावकः स्रोता स्रवः तारकः तरिता तरीता तरः चिकित्सकः चिकित्सिता चिकित्सः नन्दकः नन्दिता नन्दः सञ्जकः सङ्क्ता सञ्जः गोपायकः गोपायिता गोपायः गोपकः गोप्ता गोपिता गोपः गामकः गन्ता गमः सर्पकः स्रप्ता सर्प्ता सर्पः नामकः नन्ता नमः क्रमकः क्रमिता क्रमः भ्रमकः भ्रमिता भ्रमः अक्षकः अष्टा अक्षिता अक्षः दर्शकः द्रष्टा दर्शः श्वायकः श्वयिता श्वयः वासकः वस्ता वसः याजकः यष्टा यजः वाहकः वोढा वहः पाचकः पक्ता पचः रञ्जकः रङ्क्ता रञ्जः शापकः शप्ता शपः गूहकः गोढा गूहिता गूहः श्रायकः श्रयिता श्रयः हारकः हर्ता हरः कारकः कर्ता करः नायकः नेता नयः ॥

अथ अदादिः ॥ आदकः अत्ता घसः वेदकः वेदिता वेदः घातकः हन्ता हनः मार्जकः मार्ष्टा मार्जिता मार्जः वाचकः वक्ता वचः स्वापकः स्वप्ता स्वपः जागरकः जागरिता जागरः दरिद्रायकः दरिद्रिता दरिद्रः रावकः रविता रवः आयकः एता अयः ईशकः ईशिता ईशः सावकः सोता सविता सवः शायकः शयिता शयः दोहकः दोग्धा दोहः लेहकः लेढा लेहः ॥

अथ ह्वादिः ॥ हावकः होता हवः ॥ अथ दिवादिः ॥ देवकः देविता देवः नर्तकः नर्तिता नर्तः शोषकः शोष्टा शोषः श्लेषकः श्लेष्टा श्लेषः शाककः शक्ता शकः शमकः शमिता शमः रोषकः रोष्टा रोषिता रोषः कोपकः कोपिता कोपः लोभकः लोब्धा लोभिता लोभः रन्धकः रधिता रद्धा रन्धः नाशकः

नंष्टा नशिता नशः तर्पकः तर्पिता त्रप्ता तर्प्ता तर्पः द्रोहकः द्रोग्धा द्रोढा द्रोहिता द्रोहः मानकः मन्ता मनः योधकः योद्धा योधः सर्जकः स्रष्टा सर्जः। अथ स्वादिः ॥ सावकः सोता सवः आशकः अष्टा अशिता अशः ॥ अथ क्र्यादिः ॥ क्रायकः क्रेता क्रयः ग्राहकः ग्रहीता ग्रहः ज्ञायकः ज्ञाता ज्ञः वारकः वरिता वरीता वरः॥ अथ तुदादिः ॥ तोदकः तोत्ता तोदः भ्रज्जकः भर्जकः भ्रष्टा भर्ष्टा भ्रज्जः भर्जः कर्षकः क्रष्टा कर्ष्टा कर्षः। कारकः करिता करीता करः मज्जकः मङ्क्ता मज्जः एषकः एष्टा एषिता एषः कोटकः कुटिता कुटः कावकः कुविता कुवः उद्वेजकः उद्वेजिता उद्वेजः आरम्भकः आरब्धा आरम्भः लम्भकः लब्धा लम्भः ॥ अथ तनादिः ॥ तानकः तनिता तनः मानकः मनिता मनः ॥ अथ रुधादिः ॥ रोधकः रोद्धा रोधः भञ्जकः भङ्क्ता भञ्जः अञ्जकः अङ्क्ता अञ्जिता अञ्जः ॥ अथ चुरादिः ॥ चोरकः चोरयिता चोरः इत्यादि ॥

**नन्द्यादिभ्योऽनः** ॥ ४४ ॥ नन्द्यादिभ्यः अनप्रत्ययो भवति कर्तरि। नन्दयतीति नन्दनः वासनः वामनः दूषणः भूषणः साधनः वादनः शोभनः रोचनः सहनः तपनः मदनः जनार्दनः मधुसूदनः वित्तनाशनः कुलदमन इत्यादयः शिष्टप्रयोगानुसारेण ज्ञेयाः ॥

**ग्रहादिभ्यो णिन्** ॥ ४५ ॥ ग्रहादिभ्यो णिन् भवति कर्तरि। गृह्णातीति ग्राही उत्साही उद्वासी उद्भासी स्थायी मन्त्री सम्मर्दी विसारीत्यादयः प्रयोगगम्याः ॥

**नेर्वपश्रुशाविशरक्षः** ॥ ४६ ॥ नेर्वपादिभ्यो णिन् भवति कर्तरि। निवापी निश्रावी निशायी निवेशी निरक्षी ॥

**नञो याच्व्याहृसंव्याहृव्रजवदवसः** ॥ ४७ ॥ नञो यात्रादिभ्यो णिन् भवति। अयाची अव्याहारी असंव्याहारी अव्राजी अवादी अवासी ॥

**अचोऽचित्ते** ॥ ४८ ॥ नञोऽजन्तेभ्यो णिन् भवत्यचित्ते कर्तरि। अकारी परशुः। अहारी गन्धः। सचित्ते। अकर्ता चैत्रः ॥

**रुधराधोऽपात्** ॥ ४९ ॥ अपाद्रुधराधिभ्यां णिन् भवति। अपरोधी अपराधी ॥

**इन् च परिभ्वः** ॥ ५० ॥ परेर्भुवः इन्णिनौ भवतः। परिभवी परिभावी ॥

**ज्ञाकॄप्रीगुपान्त्यात् कः** ॥ ५१ ॥ ज्ञादिभ्यः इगुपान्त्येभ्यश्च कर्तरि को भवति। अचोऽपवादः। क इत्। इटि चातो लुगित्यातो लुक्। प्रज्ञः किरः अवकिरः गिरः निगिरः गिलः निगिलः प्रियः विलिखः बुधः युधः विक्रुषः ॥

**उपसर्गादातोऽनिक्** ॥ ५२ ॥ उपसर्गादादन्तात् को भवति के च यत्रो नेक्। प्रस्थः ॥

**प्रष्ठोऽग्रगामी** ॥ ५३ ॥ अग्रगामिन्यर्थे प्रष्ठ इति निपात्यते। सुग्लः सुम्लः सुत्रः सुरः व्यालः। अनिगिति किम्। आह्वः प्रह्वः प्रज्यः ॥

**पाघ्राध्माधेड्दृशः शः** ॥ ५४ ॥ उपसर्गात् पादिभ्यः शो भवति। कापवादः। श इत्। शित्वात् पिबादि। उत्पिबः उज्जिघ्रः विधमः विधयः उत्पश्यः ॥

**धारिपारिवेद्युदेजिचेतिसातिसाहिलिम्पविन्दोऽनुपसर्गात्** ॥ ५५ ॥ अनुपसर्गेभ्यो धार्यादिभ्यो ण्यन्तेभ्यो लिम्पविन्दाभ्यां च शो भवति। धारयः पारयः वेदयः उदेजयः चेतयः सातयः साहयः लिम्पः विन्दः। उपसर्गात्। सन्धारयिता प्रलिपः प्रविदः ॥

**धुन्यो णः** ॥ ५६ ॥ अनुपसर्गाभ्यां धुनीभ्यां णो भवति। धावः नायः। उपसर्गात्। प्रधवः प्रणयः ॥

**सहादिग्रहाद्वा** ॥ ९७ ॥ अनुपसर्गेभ्यस्सहादिभ्यो ग्रहेश्च णो वा भवति। साहः सहः रामः रमः बोधः बुधः ज्वालः ज्वलः चालः चलः हालः हलः पातः पतः पादः पदः मादः मदः वामः वमः क्षारः क्षरः सादः सदः शादः शदः भावः भवः ग्राहः ग्रहः । उपसर्गात् । विबुधः उज्वलः प्रभवः इत्यादि ॥

**श्यात्तन्व्यधास्रुसंस्रवसावहृतीण्श्वसः** ॥ ९८ ॥ श्यैङः आदन्तात्तनादिभ्यश्च णो भवति। प्रतिश्यायः धायः दायः ग्लायः म्लायः तानः उत्तानः व्याधः आस्रावः संस्रावः अवसायः अवहारः अत्यायः श्वासः उच्छ्वासः ॥

**नृत्खन्रञ्जो वुट् शिल्पिनि** ॥ ९९ ॥ नृतादिभ्यो वुड् भवति शिल्पिनि कर्तरि। टित्वात् स्त्रियां ङी। नर्तकः नर्तकी खनकः खनकी। अत एव निपातनात् न्लुक् । रजकः रजकी ॥

**पाणिघट् ताडघट्** ॥ ६० ॥ एतौ शिल्पिनि कर्तरि निपात्येते। पाणिना हन्तीति पाणिघः पाणिघी मार्दङ्गिकादि । तालं हन्तीति तालघः तालघी ॥

**गस्थकः** ॥ ६१ ॥ गायतेः शिल्पिनि कर्तरि थको भवति । गाथकः ॥

**टनण्** ॥ ६२ ॥ गायतेः शिल्पिनि कर्तरि टनण् भवति । टणावितौ । यम् । गायनः गायनी ॥

**हो व्रीहिकाले** ॥ ६३ ॥ जहातेष्टनण् भवति व्रीहौ काले चार्थे । हायनाः व्रीहयः हायनः कालः ॥

**प्रुसृल्वः साधौ वुच्** ॥ ६४ ॥ प्र्वादिभ्यः साधुत्वविशिष्टेऽर्थे वुच् भवति । च इत् । साधु प्रवते प्रवकः एवं सरकः लवकः । अन्यत्र । ण्वुः । प्रावकः सारकः लावकः ॥

**आशिषि वुन्** ॥ ६५ ॥ आशिषि धातोर्वुन् भवति । न इत् । जीवतादित्याशास्यमानो जीवकः जीवका । नित्त्वान्नेत् । एवं भवकः शयकः ॥

**नाम्नि क्तिः** ॥ ६६ ॥ आशिषि धातोः क्तिर्भवति नाम्नि । शमयतात् पापानीत्याशास्यमानः शान्तिः । क्तिजलोति दीर्घः । ग्रहादिनियमान्नेट् । भूतिरित्यादि ॥

**कर्मणोऽण्** ॥ ६७ ॥ कर्मणः पराद्धातोरण् भवति । अजाद्यपवादः ॥ कुम्भं करोतीति कुम्भकारः काण्डलावः वेदाध्यायः चर्चापाठः छत्रधारः द्वारपालः भारवाहः गोदोहः । स्त्रियां कुम्भकारी इत्यादि ॥

**सत्यागदास्तोः कारे** ॥ ६८ ॥ सत्यादीनां कारशब्दे मम् भवति । सत्यं करोतीति सत्यंकारः । अगदं करोतीत्यगदंकारः । अस्तुंकारः ॥

**भ्राष्ट्राग्न्योरिन्धे** ॥ ६९ ॥ भ्राष्ट्राग्न्योरणन्ते इन्धशब्दे परे मम् भवति । भ्राष्ट्रमिन्धः अग्निमिन्धः ॥

**शीलिकामिभक्ष्याचरीक्षिक्षमो णः** ॥ ७० ॥ कर्मणः शील्यादिभ्यो णो भवति । धर्मशीलः धर्मशीला धर्मकामः वायुभक्षः कुशलाचारः परापेक्षः । क्लेशक्षमः ॥

**गोऽनुपसर्गात् टक्** ॥ ७१ ॥ कर्मणोऽनुपसर्गात् गायतेष्टक् भवति । टकावितौ । इटि चातो लुक् । वक्त्रगः वक्त्रगी ॥

**सुराशीधोः पिबात्** ॥ ७२ ॥ सुराशीधुभ्यामनुपसर्गात् पिबतेष्टक् भवति । सुरापः सुरापी शीधुपः शीधुपी ॥

**आतोऽह्वावामोऽड्** । ७३ ॥ कर्मणोऽनुपसर्गादादन्ताद्धातोरड् भवति न ह्वावामाभ्यः । ड इत् । अन्त्याजादिलुक् । धनदः तनुत्रमित्यादि । ह्वावा-माभ्योऽण् । जिनह्वायः तन्तुवायः धान्यमायः ॥

**दाज्ञः प्रे** ॥ ७४ ॥ कर्मणः प्रपराभ्यां दाज्ञाभ्यामड् भवति । सुखप्रदः वचनप्रज्ञः ॥

**क्लेशतमसोऽपे** ॥ ७५ ॥ क्लेशतमोभ्यामपाद्धन्तेरड् भवति । क्लेशापहः तमोऽपहः ॥

**अमनुष्ये टक्** ॥ ७६ ॥ कर्मणो हन्तेष्टक् भवति अमनुष्ये कर्तरि । वातघ्नमाविकं क्षीरं पित्तघ्नं माहिषं पयः । पतिघ्नी पाणिरेखा । मनुष्ये कर्तरि । आखुघातः वृषलः । पापघातः मुनिः ॥

**जायापतेर्लक्षणे** ॥ ७७ ॥ जायापतिभ्यां हन्तेष्टक् भवति मनुष्ये कर्तरि लक्षणे गम्यमाने । जायाघ्नो वरः । पतिघ्नी कन्या ॥

**राजघः** ॥ ७८ ॥ राजानं हन्तीति राजघ इति निपात्यते ॥

**अर्होऽः** ॥ ७९ ॥ कर्मणोऽर्हः अप्रत्ययो भवति। अणोऽपवादः । पूजार्हो जिनः । पूजार्हा प्रतिमा ॥

**शक्तिलाङ्गलाङ्कुशयष्टितोमरधनुर्घटाद् ग्रहः** ॥ ८० ॥ शक्त्यादिभ्यो ग्रहेरड् भवति । शक्तिग्रहः लाङ्गलग्रहः अङ्कुशग्रहः यष्टिग्रहः तोमरग्रहः धनुर्ग्रहः घटग्रहः । अन्यस्मात् । पाशग्राहः ॥

**सूत्राद्धारणे** ॥ ८१ ॥ सूत्राद् ग्रहेरड् भवति धारणेऽर्थे । सूत्रग्रहः ॥

**हृञो वयोऽनुद्यमे** ॥ ८२ ॥ कर्मणो हृञोऽद् भवति वयस्यनुद्यमे च कर्तरि । कवचहरः कुमारः । विषहरो मणिः । उद्यमे भारहारः ॥

**आङि शीले** ॥ ८३ ॥ कर्मणः आङो हृञोऽद् भवति शीले स्वभावे द्योत्ये । पुष्पाण्याहर्तुं शीलमस्य पुष्पाहरः सुखाहरः ॥

**दृतिनाथात् पशाविः** ॥ ८४ ॥ दृतिनाथाभ्यां हृञ इद् भवति पशावर्थे । दृतिहरिः नाथहरिः पशुरित्यर्थः ॥

**फलेग्रह्यात्मम्भरिकुक्षिम्भरि** ॥ ८५ ॥ फलेग्रह्यादयः इदन्ता निपात्यन्ते। फलेग्रहिः वृक्षः । आत्मम्भरिः कुक्षिम्भरिः । एतौ स्वोदरपूरके ॥

**शकृत्स्तम्बाद्वत्सव्रीहौ कृञः** ॥ ८६ ॥ शकृत्स्तम्बाभ्यां कृञ इद् भवति यथासङ्ख्यं वत्से व्रीहौ चार्थे । शकृत्करिर्वत्सः । स्तम्बकरिर्व्रीहिः । अन्यत्र कर्तरि । शकृत्कारः स्तम्बकारः ॥

**किंयत्तद्बहोरः** ॥ ८७ ॥ किमादिभ्यः कृञोऽद् भवति । किंकरः यत्करः तत्करः बहुकरः । स्त्रियां किंकरेत्यादि ॥

**दिवाविभानिशाप्रभाभास्कारारुष्कर्त्रन्तानन्तादिनान्दीलिपिलिबिबलिचित्रक्षेत्रजङ्घाबाह्वहर्धनुर्भक्तसङ्ख्याट्टः** ॥ ८८ ॥ दिवादिभ्यः कृञष्टो भवति । दिवाकरः विभाकरः निशाकरः प्रभाकरः भास्करः कारकरः अरुष्करः कर्तृकरः अन्तकरः अनन्तकरः आदिकरः नान्दीकरः लिपिकरः लिबिकरः बलिकरः चित्रकरः क्षेत्रकरः जङ्घाकरः बाहुकरः अहस्करः धनुष्करः भक्तकरः एककरः द्विकरः इत्यादि । स्त्रियां चित्रकरीत्यादि ॥

**हेतुतच्छीलानुकूलेऽशब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदात्** ॥ ८९ ॥ कर्मणः कृञः हेतौ तच्छीलेऽनुकूले च कर्तरि टो भवति न शब्दादेः । यशस्करी विद्या । पूजाकरः प्रैषकरः । शब्दादेः । शब्दकारः श्लोककारः कलहकारः गाथाकारः वैरकारः चाटुकारः सूत्रकारः मन्त्रकारः पदकारः ॥

**भृतौ कर्मणः** ॥ ९० ॥ कर्मणः कृञष्टो भवति भृतौ द्योत्यायां । कर्मकरः । अन्यत्र । कर्मकारः ॥

**क्षेमप्रियमद्रात् खाण्** ॥ ९१ ॥ क्षेमादिभ्यः कृञः खाणौ भवतः ॥

**खित्यरुर्द्विषतस्यानव्ययस्य** ॥ ९२ ॥ अजन्तस्यारुर्द्विषतोश्च खिदन्ते उत्तरपदे मम् भवति नाव्ययस्य । अमावितौ क्षेमंकरः क्षेमकारः प्रियंकरः प्रियकारः मद्रंकरः मद्रकारः ॥

**मेघर्तेः खच्** ॥ ९३ ॥ मेघर्तिभ्यां कृञः खच् भवति । खचावितौ। मेघंकरः ऋतिंकरः ॥

**भयात्** ॥ ९४ ॥ भयात् कृञः खच् भवति । भयंकरः अभयंकरः ॥

**प्रियवशाद्वदः** ॥ ९५ ॥ प्रियवशाभ्यां वदः खच् भवति । प्रियंवदः वशंवदः ॥

**द्विषत्परान्तस्तापेः** ॥ ९६ ॥ द्विषत्पराभ्यां तापेः खच् भवति ॥

**खचि** ॥ ९७ ॥ ण्यन्तस्य खचि ह्रस्वो भवति । मम् । द्विषंतपः परन्तपः ॥

**मितनखपरिमाणात् पचः** ॥ ९८ ॥ मितनखाभ्यां परिमाणवाचिनश्च पचः खच् भवति । मितम्पचा ब्राह्मणी । नखम्पचा यवागूः । प्रस्थम्पचं कुलं ॥

**ह्रस्वः** ॥ ९९ ॥ अनव्ययस्याजन्तस्य खिदन्ते उत्तरपदे ह्रस्वो भवति ॥ खारिंपचं कुलं ॥

**करीषाभ्रकूलात् कषः** ॥ १०० ॥ करीषादेः कषः खच् भवति । करीषंकषः अभ्रंकषः कूलंकषः ॥

**सर्वात् सहश्च** ॥ १०१ ॥ सर्वात् कषः सहश्च खच् भवति । सर्वंकषः सर्वंसहः ॥

**भृवृधारिजिदमितपश्च नाम्नि** ॥ १०२ ॥ कर्मणो भ्रादिभ्यः सहश्च खच् भवति नाम्नि । विश्वम्भरा भूः । रथन्तरं साम । पतिंवरा कन्या । वसुन्धरा भूः । शत्रुञ्जयो गिरिः । अरिन्दमः शत्रुंतपः शत्रुंसहः इत्येते क्षत्रियाः ॥

**वाचंयमो व्रती** ॥ १०३ ॥ वाचंयम इति निपात्यते व्रतिन्यर्थे ॥

**मन्याणिन्** ॥ १०४ ॥ कर्मणो मन्यतेर्णिन् भवति । पण्डितं मन्यते इति पण्डितमानी ॥

**कर्तुः श्खः** ॥ १०५ ॥ कर्मणो मन्यतेः श्खो भवति कर्तरि कर्मणि । शित्त्वात् श्यः । पण्डितमात्मानं मन्यते पण्डितंमन्यः विद्वन्मन्यः । अनव्ययस्येति न मम्वृखौ । दोषामन्यो दिवसः ॥

**एजेः** ॥ १०६ ॥ कर्मण एजेर्ण्यन्तात् श्खो भवति । अङ्गमेजयः ॥

**शुनीस्तनाद्धेटः** ॥ १०७ ॥ शुनीस्तनाभ्यां धेटः श्खो भवति । शुनिन्धयः स्तनन्धयः ॥

**कूलादुदि रुज्वहः** ॥ १०८ ॥ कूलादुदो रुजिवहिभ्यां श्खो भवति । शित्त्वान्नेड् । कूलमुद्रुजः कूलमुद्वहः ॥

**वहाभ्राल्लिहः** ॥ १०९ ॥ वहाभ्राभ्यां लिहः श्खो भवति । वहंलिहः अभ्रंलिहः ॥

**विध्वरुस्तिलात्तुदः** ॥ ११० ॥ विध्वरुस्तिलेभ्यः स्तुदः श्खो भवति । विधुन्तुदः । सस्य जश्त्वचर्त्वे । अरुन्तुदः तिलन्तुदः ॥

**शर्धललाटवातात् हाक्तपाजः** ॥ १११ ॥ शर्धात् हाकः श्खो भवति ललाटात्तपः वाताद्जः । शर्धंजहः ललाटंतपः वातमजः ॥

**पुरन्दरभगन्दरेरम्मदोग्रंपश्यासूर्यंपश्याः** ॥ ११२ ॥ एते श्खान्ता निपात्यन्ते । पुरन्दरः शक्रः । भगन्दरो व्रणम् । इरम्मदो मेघाग्निः । उग्रंपश्यः शत्रुः । असूर्यम्पश्याः राजदाराः ॥

**सुभगाढ्यस्थूलपलितनग्नान्धप्रियात् सुपोऽच्व्यर्थे च्वौ ख्नुखुकञ् भुवः** ॥ ११३ ॥ अच्व्यन्तेभ्यः सुभगादिभ्यः सुबन्तेभ्यो भुवश्च्व्यर्थे ख्नुखुकञौ भवतः । खञावितौ ख्नाविट् ञित्यात् । असुभगः सुभगो भवतीति सुभगंभविष्णुः सुभगम्भावुकः आढ्यंभविष्णुः आढ्यम्भावुकः स्थूलम्भविष्णुः स्थूल-

म्भावुकः पलितम्भविष्णुः पलितम्भावुकः नग्नम्भविष्णुः नग्नम्भावुकः अन्ध-म्भविष्णुः अन्धम्भावुकः प्रियम्भविष्णुः प्रियम्भावुकः ॥

**कृञः करणे खनट्** ॥ ११४ ॥ अच्व्यन्तेभ्यः सुभगादिभ्यः कृञः च्व्यर्थे खनट् भवति करणे वाच्ये । असुभगं सुभगं करोति अनेनेति सुभगं-करणं धनं । सुभगंकरणी विद्या । आढ्यंकरणं स्थूलंकरणं पलितंकरणं नग्नं-करणम् अन्धंकरणं प्रियंकरणं ॥

**भावे चाशितंभवः** ॥ ११५ ॥ भावे करणे चाशितंभव इति निपात्यते । आशितस्य भवनम् आशितो भवत्यनेनेति वा आशितंभवः ओदनः ॥

**गमः खखड्डाः** ॥ ११६ ॥ सुबन्ताद्गमः खखड्डा भवन्ति । डित्यन्त्या-जादिलुक् । भुजङ्गमः तुरङ्गमः भुजङ्गः तुरङ्गः दूरगः सर्वगः इत्यादि बहुलं योज्यं ॥

**विहायसो विहश्च** ॥ ११७ ॥ विहायसो गमः खखड्डा भवन्ति विहा-यसो विहश्चादेशः । विहङ्गमः विहङ्गः विहगः ॥

**उरगः** ॥ ११८ ॥ उरसा गच्छतीत्युरग इति शिष्टं ॥

**सुगदुर्गमाधारे** ॥ ११९ ॥ आधारे एतौ निपात्येते । सुखेन गम्यते अस्मिन्निति सुगः देशः । दुःखेन गम्यते अस्मिन्निति दुर्गः ॥

**नाम्न्यः शमः** ॥ १२० ॥ शमोऽव्ययाद्धातोरद् भवति नाम्नि । शम्भवः शङ्करः शंवदः इत्यादि ॥

**आधारात्** ॥ १२१ ॥ आधारात् सुपः शीङोऽद् भवति ॥

**तत्पुरुषे कृति बहुलं** ॥ १२२ ॥ हलन्ताददन्ताच्च सप्तम्याः कृदन्ते उत्तरपदे श्लुग् बहुलं भवति तत्पुरुषसमासे । बिले शेते बिलशयः बिलेशयः । खे शेते खशयः खेशयः इत्यादयः ॥

**भिक्षासेनादायाच्च चरष्टः** ॥ १२३ ॥ भिक्षादेराधाराच्च चरष्टो भवति। भिक्षां चरतीति भिक्षाचरः सेनाचरः आदायचरः। आदायेति प्यान्तः। कुरुषु चरतीति कुरुचरः ॥

**कृदन्ते वा मं रात्रेः** ॥ १२४ ॥ रात्रेः कृदन्ते उत्तरपदे मम् वा भवति। रात्रिं चरतीति रात्रिंचरः रात्रिचरः। स्त्रियां भिक्षाचरीत्यादि ॥

**पुरोऽग्रतोऽग्रेः सर्तेः** ॥ १२५ ॥ पुरसादिभ्यः सर्तेष्टो भवति। पुरस्सरः अग्रतस्सरः अग्रेसरः। पुरस्सरीत्यादि ॥

**स्थः कः** ॥ १२६ ॥ सुपस्तिष्ठतेः को भवति। कित्त्वादातो लुक्। समे तिष्ठतीति समस्थः। एवं विषमस्थः स्वस्थः ॥

**गोऽम्बाम्बसव्यापद्वित्रिभूम्यग्निमञ्जिपुञ्जिशेकुशङ्कङ्गुबर्हिर्दिविपरमेः ष्ठः** ॥ १२७ ॥ गवादिभ्यः स्थस्य षत्वष्टुत्वे निपात्येते। गोष्ठम् अम्बाष्ठः अम्बष्ठः सव्यष्ठः अपष्ठः द्विष्ठः त्रिष्ठः भूमिष्ठः अग्निष्ठः मञ्जिष्ठः पुञ्जिष्ठः शेकुष्ठः शङ्कुष्ठः कुष्ठः अङ्गुष्ठः बर्हिष्ठः दिविष्ठः परमेष्ठः ॥

**दुहो घश्च** ॥ १२८ ॥ सुपो दुहः को भवति हो घश्च। कामदुघा ॥

**शोकापनुदतुन्दपरिमृजस्तम्बेरमकर्णेजपाः सुखाहरालसहस्तिसूचकाः** ॥ १२९ ॥ शोकापनुदादयः कान्ता यथासङ्ख्यं सुखाहराद्यर्थेषु निपात्यन्ते। शोकापनुदः सुखाहरः। तुन्दपरिमृजोऽलसः। स्तम्बेरमो हस्ती। कर्णेजपः सूचकः ॥

**मूलविभुजादयः** ॥ १३० ॥ मूलविभुजादयः कान्ताः शिष्टप्रयोगानुसारेण साधवो वेदितव्याः। मूलानि विभुजतीति मूलविभुजो रथः। नखान् मुञ्चन्तीति नखमुचानि धनूंषि। कौ मोदते कुमुदं। द्वाभ्यां पिबतीति द्विपः। एवमनेकपः कच्छपः पादपः मधुपः इत्यादयः ॥

**विण् भजः** ॥ १३१ ॥ सुपो भजो विण् भवति । स सर्वोऽप्रयोगी । गुणभाक् देहभाक् कर्मभाक् शोभाविभाञ्जि ॥

**स्पृशोऽनुदकात् क्विप्** ॥ १३२ ॥ सुपः स्पृशः क्विप् भवति नोदकात् । स सर्वोऽप्रयोगी । घृतस्पृक् । उदकात् उदकस्पर्शः ॥

**अदोऽनन्नात्** ॥ १३३ ॥ सुपोऽदः क्विप् भवति नान्नात् । प्रासुकमत्तीति प्रासुकात् भक्तात् । अनन्नादिति किम् । अन्नादः ॥

**क्रव्यात्क्रव्यादावामपक्वादौ** ॥ १३४ ॥ क्रव्यादद: आममांसभक्षे क्रव्यादिति क्विबन्तो निपात्यते । पक्वमांसभक्षे क्रव्याद इति अण् निपात्यते ॥

**मन्वन्क्वनिब्विच्च दृश्यते** ॥ १३५ ॥ सुबन्ताद्धातोः मन् वन् क्वनिप् विच् क्विप् च प्रत्ययो दृश्यते । मनि । शर्म वर्म कर्म हेम धाम दामेत्यादि । वनि ॥

**वन्यनुनासिकस्याः** ॥ १३६ ॥ धातोरनुनासिकस्य आद् भवति वनि प्रत्यये परे । विजावा अग्रेगावा सुखावा अतिक्रावा । क्वनिपि । ह्रस्वस्येति तक् । कृत्वा परिकृत्वा । ईहल्यघ्वे इतीत् । धीवा पीवा । स्त्रियां ङी ॥

**ङ्यां वनो रः** ॥ १३७ ॥ वनो रो भवति ङ्यां परतः । कृत्वरी धीवरी पीवरीत्यादि । विचि । विश प्रवेशने । वेट् । जागः शुभंयाः । सोमं पिबतीति सोमपाः । क्विपि । अन्तरिक्षसत् दिविषत् द्युसत् सुकृत् शतसूः मित्रद्विट् द्विट् मित्रभुक् मित्रध्रुट् ॥

**नह्विवृतिवृषिव्यधिसहितनिरुचि क्वौ तिकारकस्य** ॥ १३८ ॥ अजन्तस्य तेः कारकस्य च क्विबन्ते नह्यादावुत्तरपदे दीर्घो भवति । उपानत् नीवृत् प्रावृट् मर्मावित् जलासट् ॥

**गमादीनां क्वौ** ॥ १३९ ॥ हनादीनां गमादीनां च क्विपि लुग् भवति । परीतत् नीरुक् । गोधुक् कामधुक् अश्वयुक् युङ् तत्त्ववित् काष्ठभित् भित्

छित् भवच्छित् शत्रुजित् प्रजित् अनन्तजित् अग्रणीः ग्रामं नयतीति ग्रामणीः नीः पक् विराट् सम्राट् स्वाराट् मित्रभूः प्रतिभूः स्वयम्भूः। उखायाः स्रंसते उखास्रत् पर्णध्वत् विभ्राट् प्राङ् प्रत्यङ् सम्यङ् सध्र्यङ् ऋत्विक् इत्यादयः। दृश्यत इति वचनात् यथासम्भवं केवलादपि धातोः शिष्टप्रयोगेषु लक्षणीयाः ॥ बहुलाधिकारात् कर्तृकर्मकरणादिकारकविशिष्टार्थाः प्रयोज्याः ॥

**त्यदाद्यन्यसमानाद् गौणाद् दृशेराप्ये क्विकट्क्साः** ॥ १४० ॥ उपमानवाचिनस्त्यदादेरन्यसमानाभ्यां च दृशेः कर्मणि क्विकट्क्सा भवन्ति। क्विः सर्वोऽप्रयोगी। कटावितौ। स इव दृश्यत इति विगृह्य आत्वादि। तादृक् तादृशः तादृशी तादृक्षः तादृक्षा यादृक् यादृशः यादृक्षः अमूदृक् अमूदृशः अमूदृक्षः ईदृक् एतादृक् युष्मादृक् त्वादृक् भवादृक् मादृक् कीदृक् अन्यादृक् सदृक् ॥

**शीलेऽजातेः** ॥ १४१ ॥ सुबन्ताद्धातोः शीले णिन् भवति न जातेः। उष्णं भोक्तुं शीलमस्य उष्णभोजी। प्रस्थायी प्रबोधी प्रयायी। जातेः। ब्राह्मणानामन्त्रयिता ॥

**व्रताभीक्ष्ण्ये** ॥ १४२ ॥ सुपो धातोर्व्रताभीक्ष्ण्ययोर्णिन् भवति। स्थण्डिलशायी अम्बुपायी ॥

**साधौ** ॥ १४३ ॥ सुपो धातोस्साधौ णिन् भवति। साधुकारी साधुदायी ॥

**ब्रह्मवादी** ॥ १४४ ॥ साधु ब्रह्माणं वदतीति ब्रह्मवादी ॥

**व्यभेर्भुवो भूते** ॥ १४५ ॥ व्यभिभ्यां भुवो भूतेऽर्थे णिन् भवति। विभूतवानिति विभावी। अभिभूतवान् अभिभावी ॥

**करणाद्यजः** ॥ १४६ ॥ करणाद्यजो भूते णिन् भवति। महामहेनायाक्षीत् महामहयाजी ॥

**घ्नो णिन्** ॥ १४७ ॥ कर्मणो हन्तेर्भूते णिन् भवति कुत्सितायां । मातृघाती ॥

**ब्रह्मभ्रूणवृत्रात् क्विप्** ॥ १४८ ॥ ब्रह्मादिभ्यो हन्तेर्भूते क्विप् भवति । ब्रह्माणं हन्तिस्म ब्रह्महा । एवं भ्रूणहा वृत्रहा ॥

**सुकर्मपापमन्त्रपुण्यात् कृञः** ॥ १४९ ॥ स्वादिभ्यः कृञो भूते क्विप् भवति । सुष्ठु अकार्षीत् सुकृत् । कर्मकृत् पापकृत् मन्त्रकृत् पुण्यकृत् ॥

**दृशः क्वनिप्** ॥ १५० ॥ भूते कर्मणो दृशः क्वनिप् भवति । कपेत इतः । विश्वं दृष्टवान् विश्वदृश्वा ॥

**राजसहात् कृञ्युधिभ्यां** ॥ १५१ ॥ राजसहाभ्यां कृञो युधेश्च भूते क्वनिप् भवति । राजानं कृतवान् राजकृत्वा । एवं राजयुध्वा सहकृत्वा सहयुध्वा ॥

**जनोऽनौ डः** ॥ १५२ ॥ कर्मणोऽनौ जनो भूते डो भवति । ड इत् । पुमांसमनुजाता पुमनुजा । एवं स्त्र्यनुजः ॥

**सप्तम्याः** ॥ १५३ ॥ सप्तम्यन्ताज्जनो भूते डो भवति । तनौ जातः तनुजः ॥

**ययोनिमतिचरजेऽपः** ॥ १५४ ॥ अप्शब्दात् सप्तम्याः यप्रत्यये योनिमतिचरजे च श्लुग् न भवति तत्पुरुषे । अप्सुजं सरसिजं । बहुलाधिकारादब्जं सरोजम् इत्यादि ॥

**अजातेः पञ्चम्याः** ॥ १५५ ॥ पञ्चम्यन्तात् जनो भूते डो भवति न जातिवाचिनः । ज्ञानाज्जातं ज्ञानजं सुखम् । इन्द्रियजम् इत्यादि । जातेः । अश्वाज्जात इत्येव ॥

**क्वचित्** ॥ १५६ ॥ अन्यस्मादपि सुपो जनो भूते अन्यस्मिन्नपि विषये डो भवति । किं जातेन किंजः । द्विर्जातो द्विजः । न जातः अजः । परिजाः

केशाः । प्रजायते प्रजा । अनुजः । स्त्रीजमनृतं । पुंसानुजाता पुंसानुजा । ब्राह्मणाच्छंसीत्यश्लुक् ॥

**जॄषोऽतृ** ॥ १५७ ॥ जॄषो भूते अतृ भवति । ऋदित् । जरन् ॥

**सुयजो ङ्वनिप्** ॥ १५८ ॥ षुञ्यज्भ्यां भूते ङ्वनिप् भवति । ङपावितौ । सुत्वा यज्वा ॥

**भस्मादयः** ॥ १५९ ॥ भस्मन्नित्यादयो भूते मन्नन्ताः साधवः । भसितं भस्म । एवं चर्म वर्त्म कर्म इत्यादयः प्रयोगगम्याः ॥

**क्तक्तवतू** ॥ १६० ॥ धातोर्भूते क्तक्तवतू भवतः । कौतावितौ । साप्यानाप्यादिति सकर्मकात् कर्मण्यकर्मकाद् भावे क्तः । क्तवतुः पुनः कर्तर्येव । एध्यते स्म एधितमनेन । एधते स्म एधितवान् । एवं स्पर्धितं स्पर्धितवान् वन्दितः वन्दितवान् ॥

**उति शपः क्तयोः भावारम्भे** ॥ १६१ ॥ शप्भाजो धातोरुकारे उपान्त्ये सति भावारम्भविहितयोरिडाद्योः क्तक्तवत्वोः परतः कित्कार्यं वा भवति । मुदितमनेन मोदितमनेन । प्रमुदितः प्रमुदितवान् प्रमोदितः प्रमोदितवान् ॥

**क्तयोर्द्रश्वोदित्सूयत्यादेर्दस्य चामन्मूर्छः** ॥ १६२ ॥ दान्तात् रान्तात् श्र्यैङः ओदितः सूयत्यादेश्च तकाराद्योः क्तक्तवत्वोरादेस्तस्य नो भवति पूर्वस्य दस्य च नः न मन्मूर्छोः । ह्न्नमनेन ह्न्नवान् । ह्लादैङ् सुखे ॥

**नडीयश्वेदिद्वेटोऽपतः** ॥ १६३ ॥ डीयश्विभ्यामैदितो विकल्पितेटश्च क्तयोरिड् न भवति न पतः । नत्वं ॥

**ह्लादोऽःक्ति** ॥ १६४ ॥ ह्लाद आतस्तादौ कित्यद् भवति । ह्लन्नमनेन ह्लन्नवान् । यतैङ् प्रयत्ने । प्रयत्तः प्रयत्तवान् स्फुटितं स्फोटितमनेन । स्फुटितवान् स्फोटितवान् । क्षतः क्षतवान् ॥ क्षीबृङ् मदे ॥

**अनुपसर्गाः क्षीबोल्लाघकृशपरिकृशफुल्लोत्फुल्लसंफुल्लाः** ॥ १६५ ॥ अनुपसर्गाः क्षीबादयः क्तान्ता निपात्यन्ते । क्षीबः । मीमांसितः मीमांसितवान् पनायितः पनायितवान् । क्विजलीति दीर्घः । क्षान्तः क्षान्तवान् कामितः कामितवान् । ल्व्यूदित इति वेट्त्वान्नेट् । कान्तं कान्तवान् । ऊयैङ् तन्तुसन्ताने ॥ ऐदित्त्वान्नेट् । यलुक् । ऊतः ऊतवान् । स्फायैङ् ओप्यायैङ् वृद्धौ ॥

**स्फायः** ॥ १६६ ॥ स्फायः क्तयोः साचो यञ इग् भवति ॥

**दीर्घोऽचोऽवः** ॥ १६७ ॥ अजन्तस्य साचो यञ इग् दीर्घो भवति प्रत्यये परतः न वेञः । स्फीतः स्फीतवान् ॥

**क्तयोरनुपसर्गस्य** ॥ १६८ ॥ अनुपसर्गस्य प्यायः क्तयोः साचो यञ इग् भवति । पीनः पीनवान् ॥

**आङोऽन्धूधसोः** ॥ १६९ ॥ आङः प्यायः क्तयोस्साचो यञ इग् भवति अन्धूधसोरर्थयोः । आपीनोऽन्धुः आपीनवान् आपीनमापीनवदूधः । अन्यत्रोपसर्गाच्च क्तयोर्यलुक् । प्रप्यानः प्रप्यानवान् । शिक्षितः शिक्षितवान् । स्रस्तः स्रस्तवान् । गाढः गाढवान् । स्मितं स्मितवान् ॥

**द्रवमूर्तौ श्यः** ॥ १७० ॥ श्यैङः क्तयोस्साचो यञ इग् भवति द्रवमूर्तौ काठिन्येऽर्थे । शीनं शीनवद् घृतम् । अन्यत्र । संश्यानो वृश्चिकः । शीतमिति निपातनात् सिद्धं । धूतः धूतवान् ॥

**दोसोमास्थाक्ङि** ॥ १७१ ॥ द्यत्यादीनां क्तादौ इद्भवति । विनिमितः विनिमितवान् ॥

**दद् घोर्दः** ॥ १७२ ॥ घुसंज्ञस्य दः क्तादौ दद् भवति । दत्तः दत्तवान् । प्यैङ् वृद्धौ ॥ आत्वे ॥

**ह्लो यत्र आतोऽध्याख्यः** ॥ १७३ ॥ हलः पराद्यत्रः आतस्ताद्योः क्तयोस्तस्य नो भवति न ध्याख्याभ्यां । घ्यानः घ्यानवान् ॥ त्रैङ् पालने ॥

**ह्रीत्राद्राघ्रीन्दनुद्विन्तेः** ॥ १७४ ॥ ह्रियादिभ्यः क्तयोस्तस्य नो वा भवति पूर्वस्य दस्य च नः । त्राणः त्राणवान् त्रातः त्रातवान् ॥ क्लिशौ विबाधने ॥

**पूङ्क्लिशो वा** ॥ १७५ ॥ पूङ्क्लिशिभ्यां क्तयोः क्त्वायाश्च इड्वा भवति । पूतः पूतवान् ॥

**शीङ्डीङ्पूङ्स्विद्यिदिच्चिद्धृषो न** ॥ १७६ ॥ शीङादीनाम् इडाद्योः क्तयोः किद्वन्न भवति । पवितः पवितवान् डयितः डयितवान् द्युतितमनेन द्योतितमनेन प्रद्युतितवान् प्रद्योतितवान् शुभितमनेन शोभितमनेन शुभितवान् शोभितवान् ॥ ञिमिदाङ् स्नेहने ॥

**आदितः** ॥ १७७ ॥ आदितो धातोः क्तयोरिड् न भवति । मिन्नः मिन्नवान् । ञिष्विदाङ् मोचने च ॥ स्विन्नः स्विन्नवान् ॥

**भावारम्भे वा** ॥ १७८ ॥ आदितः क्तयोरिड् वा भवति भावारम्भयोः । स्विन्नमनेन स्वेदितमनेन प्रस्विन्नवान् प्रस्वेदितवान् । क्षुभि सञ्चलने ॥

**क्षुब्धस्वान्तध्वान्तपरिवृढलग्नम्लिष्टविरिब्धफाण्टबाढं मन्थमनस्तमःप्रभुसक्तास्पष्टस्वरानायासभृशे** ॥ १७९ ॥ क्षुब्धादयः क्तान्ता अनिट्का निपात्यन्ते यथासङ्ख्यं मन्थादिष्वर्थेषु । क्षुब्धः समुद्रः मथित इत्यर्थः अन्यत्र । क्षुभितः क्षुभितवान् समुद्रः । सञ्चलित इत्यर्थः । विस्रब्धः विस्रब्धवान् भ्रष्टः भ्रष्टवान् ध्वस्तः ध्वस्तवान् वृत्तः वृत्तवान् क्लृप्तः क्लृप्तवान् ॥

**वमरुच्यमत्वरसङ्घुषास्वनः** ॥ १८० ॥ वमादिभ्यः क्तयोरिड्वा भवति । त्वरितः त्वरितवान् । अनिट्सूत्र । तूर्णः तूर्णवान् स्मृतः स्मृतवान् ॥

**ऋल्वादेः क्तक्तिनोर्नोऽप्रः** ॥ १८१ ॥ ऋदन्तात् ल्वादिभ्यश्च क्तयोः क्तिनश्च तस्य नो भवति न पॄ इत्यतः । दीर्णः दीर्णवान् श्राणः श्राणवान् । अमन्मूर्छ इति न नः । मत्तः मत्तवान् । क्षुब्धादित्वात् ध्वान्तं तमः । अन्यत्र । ध्वनितवान् । स्वान्तं मनः । अन्यत्र । स्वनितं स्वनितवान् । आङ्पूर्वत्वे । वमरुषीति वेट् । आस्वान्तम् आस्वनितं । फाण्टमनायासकषायः । अन्यत्र । फणितं फणितवान् सोढः सोढवान् । हन्मन्येति मलुक् । रतः रतवान् बुद्धः बुद्धवान् चलितः चलितवान् । अपत इति वचनात् इट् । पतितः पतितवान् वान्तः वान्तवान् वमितः वमितवान् आसन्नः आसन्नवान् क्रुष्टः क्रुष्टवान् ॥

**श्लिषशीङ्स्थाजॄषास्वसजन्रुहारम्भात् क्तः** ॥ १८२ ॥ श्लिषादिभ्यः आदिकर्मार्थेभ्यश्च यः क्तः स कर्तरि वा भवति । आरूढो वृक्षं चैत्रः । आरूढो वृक्षश्चैत्रेण । आरूढवान् वृक्षं चैत्रः ॥

**गत्यकर्मण्याधारे च** ॥ १८३ ॥ गत्यर्थादकर्मकाच्च धातोः क्तः कर्तर्याधारे च वा भवति । भूतः भूतवान् चैत्रः । भूतं चैत्रेण । जितः जितवान् पीतः पीतवान् घ्रातः घ्रातवान् घ्राणः घ्राणवान् ध्मातः ध्मातवान् स्थितः स्थितवान् । इदमस्य स्थितं । स्थितमनेन । दत्तः दत्तवान् अवदातः अवदातवान् ग्लानः ग्लानवान् म्लानः म्लानवान् निद्राणः निद्राणवान् द्रातः द्रातवान् द्राणः द्राणवान् गीतः गीतवान् स्त्यानः स्त्यानवान् ॥

**स्त्यः प्रपूर्वस्य** ॥ १८४ ॥ प्रपूर्वस्य स्त्यायतेः क्तयोः साचो यत्र इग् भवति ॥

**प्रस्त्यो मः** ॥ १८५ ॥ प्रात् स्त्यः क्तयोस्तो मो वा भवति । प्रस्तीमः प्रस्तीमवान् प्रस्तीतः प्रस्तीतवान् ॥

**क्षः** ॥ १८६ ॥ क्षायतेः क्तयोः स्तो मो भवति । क्षामः क्षामवान् । ओवै शोषणे । वानः वानवान् । अध्याख्य इति वचनात् न नः । ध्यातः ध्यातवान्

स्मृतः स्मृतवान् ऋतः ऋतवान् तीर्णः तीर्णवान् चिकित्सितः चिकित्सितवान् चित्तः चित्तवान् सिद्धः सिद्धवान् । अर्द गतियाचनयोः ॥

**अविदूरेऽभेः** ॥ १८७ ॥ अभेरर्दः क्तयोरिड् न भवति अविदूरे समीपे। अभ्यर्णम् । अन्यत्र । अभ्यर्दितः अभ्यर्दितवान् वन्दितः वन्दितवान् स्कन्नः स्कन्नवान् । शुच शोके। शुचितः शुचितवान् ॥

**लुभ्यञ्चेर्विमोहार्चे** ॥ १८८ ॥ लुभ्यञ्चिभ्यां क्तयोः क्त्वायाश्च इड् भवति क्रमेण विमोहे अर्चायां च । अञ्चितः अञ्चितवान्। अन्यत्र। उदक्तं जलम्। उदक्तवान् कूपात् । म्लेच्छ अव्यक्तायां वाचि । क्षुब्धेति निपातनात् म्लिष्टमविस्पष्टम् । अन्यत्र । म्लेच्छितं मूर्तः मूर्तवान् मूर्तमनेन मूर्छितमनेन प्रमूर्तः प्रमूर्तवान् प्रमूर्छितः प्रमूर्छितवान् सक्तः सक्तवान् गोपायितः गोपायितवान् गुप्तः गुप्तवान् ॥

**जप्तस्वप्तापचितं** ॥ १८९ ॥ जप्तादयः क्तयोरनिट्का वा निपात्यन्ते । जप्तः जप्तवान् जपितः जपितवान् गतः गतवान् सृप्तः सृप्तवान्। इदमहेः सृप्तं । सृप्तमनेन। कनै दीप्तिकान्तिगतिषु ॥ कान्तः कान्तवान् यतः यतवान् आचान्तः आचान्तवान् क्रान्तः क्रान्तवान् भ्रान्तः भ्रान्तवान् । ञिफला विशरणे ॥ ति चातो ल्र्युदित्युत् । प्रफुल्तः प्रफुल्तवान् । फुल्ल विकसने । अनुपसर्गा इति निपातनात् फुल्लः उत्फुल्लः सम्फुल्लः । चरितः चरितवान् । ऊच् । छ्यूतः छ्यूतवान् । धुर्वै हिंसायां । वो लुक् । धूर्तप्रशंसारूढैरिति निपातनान्न नः । धूर्तः धूर्तवान् । कष हिंसायां ॥

**कषः कृच्छ्रगहने** ॥ १९० ॥ कषःक्तयोरिड् न भवति कृच्छ्रे गहने चार्थे । कष्टं याचितं । कष्टं विपिनम् । अन्यत्र । निकषितं स्वर्णं ॥

**शसिधृषः प्रगल्भे** ॥ १९१ ॥ शसिधृषिभ्यां क्तयोरिड् न भवति प्रग–

ल्भेऽर्थे । शस्तः प्रगल्भः । अन्यत्र । शसितः शसितवान् धृष्टः धृष्टवान् । मृषू सहने च ॥

**मृषः क्षान्तौ** ॥ १९२ ॥ मृषः इडाद्योः क्तयोः किद्वन्न भवति क्षान्तौ । मर्षितः मर्षितवान् । अन्यत्र । अपमृषितं वक्ति । अनिटि । मृष्टं मृष्टवान् कृष्टं कृष्टवान् । हृषू अलीके ॥

**हृषेर्लोमविस्मयप्रतिघाते** ॥ १९३ ॥ हृषेः क्तयोरिड्वा भवति लोमविस्मयप्रतिघातेषु । हृष्टानि हृषितानि लोमानि । हृष्टो हृषितः विस्मितः । हृष्टाः हृषिताः दन्ताः । प्रतिहता इत्यर्थः । अन्यत्र । हृष्टोऽलीके ॥ घुषृ शब्दे ॥

**घुषोऽविशब्दे** ॥ १९४ ॥ घुषः क्तयोरिड् न भवति न विशब्दे । घुष्टौ पादौ । सम्बद्धावित्यर्थः । विशब्दे । विघुषितानि वाक्यानि । दृष्टः दृष्टवान् शस्तः शस्तवान् दग्धः दग्धवान् मीढः मीढवान् रहितः रहितवान् । दृह दृहु पूष बृह वृद्धौ ॥

**दृढः स्थूलबलिनोः** ॥ १९५ ॥ स्थूले बलिनि चार्थे दृढो निपात्यते । अन्यत्र । दृहितः दृहितवान् दृंहितः । क्षुब्धेति निपातनात् परिवृढः प्रभुः । अन्यत्र । परिबृहितः । बृहु शब्दे च । परिबृंहितः । इग्दीर्घौ । शूनः शूनवान् ॥

**क्त्वाक्तयोः क्षुध्वसः** ॥ १९६ ॥ क्षुधिवसिभ्यां क्तयोः क्त्वायाश्चेड् भवति । उषितः उषितवान् उदितः उदितवान् इष्टः इष्टवान् उप्तः उप्तवान् ऊढः ऊढवान् । अव इति न दीर्घः । उतः उतवान् वीतः वीतवान् आहूतः आहूतवान् । ऊच्यैच् । धौतः धौतवान् ॥

**शुषपचः कं** ॥ १९७ ॥ शुषः क्तयोस्तः को भवति पचो वः । पक्वः पक्ववान् भक्तः भक्तवान् रक्तः रक्तवान् । जप्तेति निपातनात् । चायृञ् पूजायां च । अपचितः अपचितवान् अपचायितः अपचायितवान् ॥

**जन्सन्खनां** ॥ १९८॥ जनादीनां क्ङिति जलादौ नस्य आद् भवति । खातः खातवान् दीदांसितः दीदांसितवान् गूढः गूढवान् श्रितः श्रितवान् हृतः हृतवान् कृतः कृतवान् नीतः नीतवान् ॥

अथादादिः ॥

**जग्धद्ः प्ये च** ॥ १९९॥ अदः तादौ किति प्ये च जग्ध् भवति । जग्धः जग्धवान् । अदोऽनन्नादिति निपातनादन्नमित्यपि ॥

**वित्तं धनप्रतीतं** ॥ २००॥ धनप्रतीतयोर्वित्तमिति निपात्यते । वित्तः प्रख्यातः । वित्तं धनम् । अन्यत्र। विदितः विदितवान् । हतः हतवान् मृष्टः मृष्टवान् उक्तः उक्तवान् सुतः सुतवान् प्राणितः प्राणितवान् विश्वस्तः विश्वस्तवान् विश्वसितः विश्वसितवान् जागरितः जागरितवान् दरिद्राणः दरिद्राणवान् शिष्टः शिष्टवान् उशितः उशितवान्। किल्युगिति नेट्। रुतः रुतवान् इतः इतवान् यातः यातवान् ॥

**निर्वाणोऽवाते** ॥ २०१॥ अवाते कर्तरि निर्वाण इति निपात्यते । निर्वाणो मुनिः । वाते । निर्वातोऽवातः । दातं बर्हिः । ख्यातः ख्यातवान् मितः मितवान् ईशितः ईशितवान् आसितः आसितवान् अध्यासितो ग्रामम् । इदमध्यासितं वसितः वसितवान् । पृचैङ् सम्पर्चने। संपृक्तः सम्पृक्तवान् सूतः सूतवान् शयितः शयितवान् अतिशयितो गुरुम् । अधीतः अधीतवान् द्विष्टः द्विष्टवान् लीढः लीढवान् उक्तः उक्तवान् ॥ अथ ह्वादिः ॥ हुतः हुतवान् ह्रीतः ह्रीतवान् ह्रीणः ह्रीणवान् हीनः हीनवान् हानः हानवान् मितः मितवान् भृतः भृतवान् दत्तः दत्तवान् ॥

**त्तोऽच उपसर्गात्** ॥ २०२॥ अजन्तादुपसर्गात् घुसंज्ञकस्य दस्तादौ किति त्तो भवति । अशावितौ शित्त्वात्सर्वस्य । आत्तः आत्तवान् ॥

**धाञो हिः** ॥ २०३ ॥ धाञस्तादौ किति हिर्भवति । हितः हितवान् निक्तः निक्तवान् ॥ अथ दिवादिः ॥ ऊच् । द्यूतः द्यूतवान् स्यूतः स्यूतवान् नृत्तं नृत्तवान् त्रस्तः त्रस्तवान् क्षिप्तः क्षिप्तवान् विद्धः विद्धवान् पुष्टः पुष्टवान् शुष्कः शुष्कवान् तुष्टः तुष्टवान् दुष्टः दुष्टवान् । आश्लिष्टः कन्यां देवदत्तः । आश्लिष्टा कन्या देवदत्तेन । आश्लिष्टवान् ॥

**शकेः कर्मणि** ॥ २०४ ॥ शकेः कर्मणि क्तस्येड्वा भवति । शक्तः । शकितः कटः कर्तुं चैत्रेण । अन्यत्र । शक्तः शक्तवान् क्रुद्धः क्रुद्धवान् क्षुधितः क्षुधितवान् शुद्धः शुद्धवान् सिद्धः सिद्धवान् शान्तः शान्तवान् अस्तः अस्तवान् उचितः उचितवान् भ्रष्टः भ्रष्टवान् । अनुपसर्गादिति निपातनात् । परिक्लशः परिक्लशवान् तृषितः तृषितवान् रुष्टः रुष्टवान् कुपितः कुपितवान् । लुभिताः केशाः । अन्यत्र । लुब्धो देवदत्तेन । क्लिन्नः क्लिन्नवान् रद्धः रद्धवान् मुग्धः मुग्धवान् मूढः मूढवान् । अनुजीर्णो वृषलीं वृषलः ॥

**शो व्रते** ॥ २०५ ॥ शस्तादौ कितीड् भवति व्रतशब्दे उत्तरपदे । संशितव्रतः ॥

**छश्च वा** ॥ २०६ ॥ शश्छश्च तादौ कितीड्वा भवति । शितः शितवान् शातः शातवान् छितः छितवान् छातः छातवान् सितः सितवान् दितः दितवान् जातः जातवान् दीप्तः दीप्तवान् पूर्णः पूर्णवान् जूर्णः जूर्णवान् । क्लिशि उपतापे । क्लिष्टः क्लिष्टवान् क्लिशितः क्लिशितवान् पन्नः पन्नवान् विन्नः विन्नवान् खिन्नः खिन्नवान् मतः मतवान् युक्तः युक्तवान् सृष्टः सृष्टवान् सूनः सूनवान् दूनः दूनवान् दीनः दीनवान् मीनः मीनवान् रीणः रीणवान् लीनः लीनवान् नद्धः नद्धवान् ॥ अथ स्वादिः ॥ सुतः सुतवान् स्तृतः स्तृतवान् वृतः वृतवान् धूतः धूतवान् । टुदु उपतापे ॥

**दुग्वोर्दीर्घश्च** ॥ २०७ ॥ दुगुभ्यां क्तयोस्तो नो भवति दीर्घश्च धातो-

स्वः । दूनः दूनवान् श्रुतः श्रुतवान् हितः हितवान् राद्धः राद्धवान् । प्रगल्भे । धृष्टः धृष्टवान् । अन्यत्र । धर्षितः धर्षितवान् । अष्टः अष्टवान् ॥ अथ क्र्यादिः ॥ क्रीतः क्रीतवान् गृहीतः गृहीतवान् लूनः लूनवान् धूनः धूनवान् स्तीर्णः स्तीर्णवान् शीर्णः शीर्णवान् कीर्णः कीर्णवान् । अप्र इति वचनात् न नः । पूर्तः पूर्तवान् चीर्णः चीर्णवान् उदीर्णः उदीर्णवान् गीर्णः गीर्णवान् जीनः जीनवान् ज्ञातः ज्ञातवान् बद्धः बद्धवान् मृदितः मृदितवान् ॥

**क्तयोः** ॥ २०८ ॥ निष्कुषः क्तयोरिड् भवति । निष्कुषितः निष्कुषितवान् अशितः अशितवान् मुषितः मुषितवान् ॥ अथ तुदादिः ॥ तुन्नः तुन्नवान् भृष्टः भृष्टवान् । क्षि निवासगत्योः ॥

**क्षेरध्ये** ॥ २०९ ॥ क्षेः क्तयोः तो नो भवति धातोश्च दीर्घः न ध्यणार्थे भावे कर्मणि च । क्षीणः क्षीणवान् मृतः मृतवान् आदृतः आदृतवान् पृष्टः पृष्टवान् मग्नः मग्नवान् रुग्णः रुग्णवान् भुग्नः भुग्नवान् स्पृष्टः स्पृष्टवान् नुन्नः नुन्नवान् नुत्तः नुत्तवान् वृक्णः वृक्णवान् उज्झितः उज्झितवान् लुभितः लुभितवन् दृब्धः दृब्धवान् इष्टः इष्टवान् लिखितः लिखितवान् स्फुरितः स्फुरितवान् नूतः नूतवान् । गु पुरीषोत्सर्गे । गूनः गूनवान् कूतः कूतवान् । गुरैङ् उद्यमने । आगूर्णः आगूर्णवान् जुष्टः जुष्टवान् विग्नः विग्नवान् लग्नः लग्नवान् सक्तः सक्तवान् रब्धः रब्धवान् लब्धः लब्धवान् ॥ अथ तनादिः ॥ ततः ततवान् सातः सातवान् क्षतः क्षतवान् घृतः घृतवान् मतः मतवान् ॥ अथ रुधादिः ॥ रुद्धः रुद्धवान् भिन्नः भिन्नवान् ॥

**भित्तं शकलं** ॥ २१० ॥ शकले खण्डे भित्तमिति निपात्यते । छिन्नः छिन्नवान् रिक्तः रिक्तवान् क्षुण्णः क्षुण्णवान् युक्तः युक्तवान् इद्धः इद्धवान् वित्तः वित्तवान् विन्नः विन्नवान् शिष्टः शिष्टवान् भग्नः भग्नवान् भुक्तः भुक्तवान् । उन्दै क्लेदने । उत्तः उत्तवान् उन्नः उन्नवान् अक्तः अक्तवान् ॥

अथ चुरादिः ॥ णेरिक्तेति णिलुक् । चोरितः चोरितवान् कथितः कथितवान् इत्यादि ॥ णिजन्तेभ्योऽप्येवं ॥

**दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ता वा** ॥ २११ ॥ एते ण्यन्ताः क्ते वा निपात्यन्ते । दान्तः दमितः शान्तः शमितः पूर्णः पूरितः दस्तः दासितः स्पष्टः स्पाशितः छन्नः छादितः ज्ञप्तः ज्ञापितः ज्ञपितः । शेषं सर्वं चुरादिवत् । भावितः भावितवान् कारितः कारितवान् आदितः आदितवानित्यादि ॥

**वयःशक्तिशीले** ॥ २१२ ॥ धातोः सति वर्तमानेऽर्थे शानो भवति वयःशक्तिशीलेषु गम्येषु । शित्वाच्छबादि । वयसि । शिखण्डं वहमानः । शक्तौ । द्विपमभिभवमानः । शीले । वितरमाणः इत्यादि नेयं ॥

**धारीङः शत्रकृच्छ्रे** ॥ २१३ ॥ धारीङ्भ्यां सति कर्तरि शतृ भवति अकृच्छ्रे अक्लेशे गम्ये । व्याकरणं धारयन् । प्रवचनमधीयन् ॥

**तृ साधुधर्मशीलेषु** ॥ २१४ ॥ धातोः सति तृप्रत्ययो भवति साधुधर्मशीलेषु । साधौ । दानं कर्ता । धर्मे । जिनमर्चिता । शीले । हसिता इत्यादि नेयं ॥

**भूवृतवृधभ्राजसहचररुचापत्रपालङ्कृञ्निराकृञ्प्रजनोत्पचोत्पतोत्पदोन्मदादिष्णुः** ॥ २१५ ॥ भूवादिभ्यः सति इष्णुर्भवति साधुधर्मशीलेषु । भविष्णुः वर्तिष्णुः वर्धिष्णुः भ्राजिष्णुः सहिष्णुः चरिष्णुः रोचिष्णुः अपत्रपिष्णुः अलङ्करिष्णुः निराकरिष्णुः प्रजनिष्णुः उत्पचिष्णुः उत्पतिष्णुः उत्पदिष्णुः उन्मदिष्णुः ॥

**भूजेः स्नुक्** ॥ २१६ ॥ भूजिभ्यां सति स्नुक् भवति साधुधर्मशीलेषु । कित्त्वान्नेड् । भूष्णुः जिष्णुः ॥

**ग्लास्थः स्नुः** ॥ २१७ ॥ ग्लास्थाभ्यां सति स्नुर्भवति साध्वादिषु । ग्लास्नुः स्थास्नुः ॥

**गृधिधृषिक्षिपत्रसः क्नुः** ॥ २१८ ॥ गृधादिभ्यः सति क्नुर्भवति साध्वादिषु । क इत् । गृध्नुः धृष्णुः क्षिप्नुः त्रस्नुः ॥

**सन्भिक्षाशन्सिन्दिच्छादुः** ॥ २१९ ॥ सनन्तात् भिक्षादिभ्यश्च सत्युर्भवति साध्वादिषु । बुभूषुः चिकीर्षुः भिक्षुः आशंसुः वेत्तीति विन्दुः निपातनान्नम् । इच्छुः ॥

**शॄवन्दादारुः** ॥ २२० ॥ शॄवन्दिभ्यां सत्यारुर्भवति साध्वादिषु । शरारुः वन्दारुः ॥

**निद्रातन्द्राश्रद्धास्पृहिगृहिपतिशीङ्दयादालुः** ॥ २२१ ॥ निद्रादिभ्यः सत्यालुर्भवति साध्वादिषु । निद्रालुः तन्द्रालुः श्रद्धालुः स्पृहयालुः गृहयालुः पतयालुः शयालुः दयालुः ॥

**भूवृषस्थाशॄहन्कम्गमादुकण्** ॥ २२२ ॥ भूवादिभ्यः सत्युकण् भवति साध्वादिषु । ण इत् । भावुकः वर्षुकः स्थायुकः शारुकः घातुकः कामुकः गामुकः ॥

**लषपत्पदः** ॥ २२३ ॥ लषादिभ्यः सत्युकण् भवति साध्वादिषु । लाषुकः पातुकः पादुकः ॥

**क्रुद्भूषार्थसृगृधज्वलजुशुभश्चानः** ॥ २२४ ॥ क्रोधार्थात् भूषार्थात् सृादिभ्यो लषादिभ्यश्च सत्यनो भवति साध्वादिषु । क्रोधनः कोपनः भूषणः मण्डनः सरणः गर्धनः ज्वलनः जवनः शोभनः लषणः पतनः पदनः ॥

**हलाद्यन्ताद् ङिदितः** ॥ २२५ ॥ हलादिहलन्तादकर्मकात् ङितः इदितश्च सत्यनो भवति साध्वादिषु । वर्तनः स्पर्धनः मीमांसनः चेतनः । अविवक्षितकर्मकस्याकर्मकत्वं ॥

**यज्वद्दशजपादूकः** ॥ २२६ ॥ यङन्तेभ्यो यजादिभ्यस्सत्यूको भवति साध्वादिषु । यायजूकः वावदूकः दन्दशूकः जञ्जपूकः ॥

**जागुः** ॥ २२७ ॥ जागुः सत्यूको भवति साध्वादिषु । जागरूकः ॥

**शमष्टकदुषद्विषद्रुहदुहयुजत्यजरजभजाभ्याहनानुरुधो घिनञ्** ॥ २२८ ॥ शमष्टकाद्दुषादिभ्यश्च सति घिनञ् भवति साध्वादिषु । अद्घञ इतः ॥ शमी दमी तमी श्रमी भ्रमी क्षमी क्लमी मादी दोषी द्वेषी द्रोही दोही योगी त्यागी रागी भागी अभ्याघाती अनुरोधी ॥

**समः पृचसृजज्वरोऽकर्मकात्** ॥ २२९ ॥ अकर्मकेभ्यः समः पृचादिभ्यस्सति घिनञ् भवति साध्वादिषु । सम्पर्की संसर्गी संज्वारी ॥

**वौ विचकषकत्थस्रम्भलसः** ॥ २३० ॥ वेर्विचादिभ्यः सति घिनञ् भवति साध्वादिषु । विवेकी विकाषी विकत्थी विस्रम्भी विलासी ॥

**लपोऽपे च** ॥ २३१ ॥ अपविभ्यां लपः सति घिनञ् भवति साध्वादिषु । अपलापी विलापी ॥

**चरोऽतौ च** ॥ २३२ ॥ अत्यपाभ्यां चरस्सति घिनञ् भवति साध्वादिषु । अतिचारी अपचारी ॥

**लपसृद्रुमथवदवसः प्रे** ॥ २३३ ॥ प्राल्लपादिभ्यः सति घिनञ् भवति साध्वादिषु । प्रलापी प्रसारी प्रद्रावी प्रमाथी प्रवादी प्रवासी ॥

**परेः सृवदहमुहः** ॥ २३४ ॥ परेः स्रादिभ्यस्सति घिनञ् भवति साध्वादिषु । परिसारी परिवादी परिदाही परिमोही ॥

**क्षिपरटः** ॥ २३५ ॥ परेः क्षिपरटाभ्यां सति घिनञ् भवति साध्वादिषु । परिक्षेपी परिराटी ॥

**वादेश्च वुञ्** ॥ २३६ ॥ परेर्वादेः क्षिपरटाभ्यां च सति वुञ् भवति साध्वादिषु । परिवादकः परिक्षेपकः परिराटकः ॥

**निन्दहिंसक्लिशखादविनाशिव्याभाषासूयात्** ॥ २३७ ॥ निन्दादिभ्यस्सति वुञ् भवति साध्वादिषु । निन्दकः हिंसकः क्लेशकः खादकः विनाशकः व्याभाषकः असूयकः ॥

**कुट्टिलुण्टिवृङ्जल्पिभिक्षादाकट्** ॥ २३८ ॥ कुट्टादिभ्यः सत्याकट्-प्रत्ययो भवति साध्वादिषु । ट इत् । कुट्टाकः लुण्टाकः वराकः जल्पाकः भिक्षाकः । स्त्रियां कुट्टाकीत्यादि ॥

**दृक्षीणमज्यव्यथाभ्यमपरिभूविश्रेरिन्** ॥ २३९ ॥ द्रादिभ्यस्सतीन् भवति साध्वादिषु । आदरी क्षयी उदयी वमी जयी अव्यथी अभ्यमी परिभवी विश्रयी ॥

**प्रात् सूजोः** ॥ २४० ॥ प्रात् सूजुभ्यां सतीन् भवति साध्वादिषु । प्रसवी प्रजवी ॥

**मरक् सृदघसः** ॥ २४१ ॥ सृादिभ्यः सति मरक् भवति साध्वादिषु । क इत् । सृमरः अद्मरः घस्मरः ॥

**भञ्जभासमिदो घुरः** ॥ २४२ ॥ भञ्जादिभ्यस्सति घुरो भवति साध्वादिषु ॥

**घुरकेलिमकृष्टपच्यं कर्मणि** ॥ २४३ ॥ घुरकेलिमौ प्रत्ययौ कृष्टपच्यश्च कर्मणि कर्तरि भवति । भज्यते स्वयमेव भङ्गुरं वपुः । अत एव वचनाद्धातोः केलिमः । पचेलिमः । उद्भिदेलिमः । इत्यादि । भासादेः कर्तरि । भासुरः मेदुरः ॥

**वेत्तिच्छिद्भिदः कित्** ॥ २४४ ॥ विदादिभ्यः सति घुरो भवति साध्वादिषु स च कित् । बहुलाधिकारात् कर्तर्यपि । विदुरः कर्मच्छिदुरः भिदुरः ॥

**सर्तीणग्भ्रजेद्वरप्** ॥ २४५ ॥ सर्यादिभ्यः सति द्वरप् भवति साध्वा-

दिषु स च कित् । टपावितौ । तक् । सृत्वरः इत्वरः नश्वरः जित्वरः । स्त्रियां सृत्वरी ॥

**गत्वरः** ॥ २४६ ॥ सति साध्वादिषु गत्वर इति निपात्यते ॥

**नंकम्यजस्कम्पस्मिहिंसदीपो रः** ॥ २४७ ॥ नमादिभ्यस्सति रो भवति साध्वादिषु । नम्रः कम्रः अजस्रं कम्प्रः स्मेरः हिंस्रः दीप्रः ॥

**स्वप्तृषिधृषो ङ्नज्** ॥ २४८ ॥ स्वपादिभ्यः सति ङ्नज् भवति साध्वादिषु । ङ इत् । स्वप्नक् तृष्णक् धृष्णक् ॥

**भ्यः क्रुक्लुकक्लुकाः** ॥ २४९ ॥ बिभेतेस्सति क्रुक्लुकक्लुका भवन्ति साध्वादिषु । क इत् । भीरुः भीरुकः भीलुकः ॥

**स्थेशभासपिसकसो वरः** ॥ २५० ॥ स्थादिभ्यः सति वरो भवति साध्वादिषु । स्थावरः ईश्वरः भास्वरः पेस्वरः विकस्वरः ॥

**यायावरश्च** ॥ २५१ ॥ सति साध्वादिषु यायावर इति निपात्यते ॥

**संविप्राद् भुवोऽनाम्न्युड्** ॥ २५२ ॥ चानुकृष्टत्वात् साधुधर्मशीलेष्विति निवृत्तं । संविप्रेभ्यो भुवः उड् भवति न नाम्नि । सम्भुः विभुः प्रभुः । नाम्नि । विभूरित्यादि ॥

**मितद्र्वादयः** ॥ २५३ ॥ सति मितद्रु इत्यादयो निपात्यन्ते । मितद्रुः शम्भुः इत्यादयः शिष्टप्रयोगेषु लक्ष्याः ॥

**इत्रः प्वो दैवते** ॥ २५४ ॥ प्व इत्रो भवति दैवते कर्तरि । पूयात् पवित्रो भगवान् मनो मे ॥

**संज्ञर्षौ करणे** ॥ २५५ ॥ पुवः करणे इत्रो भवति संज्ञायाम् ऋषौ चाभिधेये । पवित्रा नदी । पवित्रो जिनमुनिः ॥

**लूधूसूखनसहचरर्तेः** ॥ २९६ ॥ ल्वादिभ्यः करणे इत्रो भवति । लूयते अनेनेति लवित्रम् । एवं धवित्रं सवित्रं खनित्रं सहित्रं चरित्रम् अरित्रं ॥

**पो हलक्रोडमुखे त्रट्** ॥ २९७ ॥ प्वस्त्रट् भवति हलमुखे क्रोडमुखे च करणे । ट इत् । अत्वषुणादेरिति नेट् । पोत्रं ॥

**दान्नीशसयुयुसिच्मिस्तुतुदिमिहनहदंशपतः** ॥ २९८ ॥ दाबादिभ्यः करणे त्रट् भवति । दात्रं नेत्रं शस्त्रं योक्त्रं योत्रं सेक्त्रं सेत्रं स्तोत्रं तोत्रं मेढ्रः नद्ध्री । दंष्ट्रा अजादित्वादाङ् । पत्त्रं ॥

**धात्री** ॥ २९९ ॥ धेटो धाञश्च कर्मणि त्रटि धात्रीति निपात्यते ॥

**मतिपूजार्थञीच्छील्यादिभ्यः क्तः** ॥ ३०० ॥ इच्छार्थेभ्यः ज्ञानार्थेभ्यः पूजार्थेभ्यः ञीद्भ्यः शील्यादिभ्यश्च सत्यर्थे क्तो भवति । सतां मतः सतामिष्टः सतां ज्ञातः सतां विदितः सतां पूजितः सतामर्चितः मिन्नः क्ष्विन्नः इद्धः ॥

शीलितो रक्षितः क्षान्तः आक्रुष्टो जुष्ट उद्यतः ।
संयतश्शयितस्तुष्टो रुष्टो रुषित आशितः ॥

क्रान्तोऽभिव्याहृतो हृष्टो दृतस्त्रृप्तो मृतस्तथा ।
लिप्तस्स्निग्धश्च दयित इत्याद्याः सति लक्षिताः ॥

**उणादयः** ॥ ३०१ ॥ धातोः सत्यर्थे उणादयो बहुलं भवन्ति । कारुः वायुः करण्डः वरण्ड इत्यादयः उणादिवृत्तौ ज्ञातव्याः ॥

**गम्यादिर्वर्त्स्यति** ॥ ३०२ ॥ वर्त्स्यति भविष्यति गम्यादयो निपात्यन्ते । गमिष्यतीति गमी आगमी भावी प्रस्थायी प्रतिबोधी प्रयायी ॥

इति ध्यणादिपरिच्छेदः ॥

**पद्रुजो घञ्** ॥ २६३ ॥ पदिरुजिभ्यां कर्तरि घञ् भवति । घञावितौ । पद्यत इति पादः । रुजतीति रोगः ॥

**सुः स्थिरव्याधिमत्स्यबले** ॥ २६४ ॥ स्थिरव्याधिमत्स्यबलेषु कर्तरि सर्तेर्घञ् भवति । स्थिरे । चन्दनसारः वज्रसारः ॥

**घञ्युपसर्गस्य च** ॥ २६५ ॥ उपसर्गस्याचो घञन्ते परे बहुलं दीर्घो भवति । अतिसारः अतीसारः । मत्स्ये । विसारः वीसारः । बले । सारः ॥

**अकर्तरि** ॥ २६६ ॥ अकर्तरि कारके भावे च धातोर्घञ् भवति । भवनं भावः । पचनं पाकः । आयः । एवं त्यागः । प्रास्यत इति प्रासः । दायः लाभः आहारः ॥

**घञि भावकरणे** ॥ २६७ ॥ रञ्जो नस्य भावकरणयोर्घञि लुग् भवति । रञ्जनं रज्यते अनेनेति वा रागः । अन्यत्र । रज्यत इति रङ्गः ॥

**स्यदो जवे** ॥ २६८ ॥ स्यन्दतेर्घञि जवे स्यद इति निपात्यते । अन्यत्र । स्यन्दः ॥

**प्रश्रथहिमश्रथैधावोदोद्मदशनम्** ॥ २६९ ॥ एते घञाद्यन्ता निपात्यन्ते । श्रन्थेर्घञि प्रश्रथः । हिमश्रथः । इन्धेरेधः । अवादुन्देरवोदः । उन्देर्मनि ओद्म । दंशेरनटि दशनं ॥

**विश्रमो घञि** ॥ २७० ॥ विश्रमो घञ्याद्वा भवति । विश्रमः विश्रामः ॥

**नोद्यमोपरमः** ॥ २७१ ॥ उदो यम उपाद्रमश्च घञ्याद् न भवति । उद्यमः उपरमः । अन्यत्र । नियामः विरामः । मजन्निति नात् । शमः जनः वधः । यमादेरात् । नामः वामः कामः चामः प्रसादः प्रासादः अतिचारः अतीचारः ॥

**घञखे चोपसर्गात्** ॥ २७२ ॥ उपसर्गाल्लभो घञि खे ञ्यमि च नम्

भवति। प्रलम्भः उपलम्भः । वाक्येति नाम्नि कुलम् । अर्घः निदाघः अवदाघः । अनाम्नि । अर्हः निदाहः अवदाहः । अदो घस् । घासः ॥

**स्फुरस्फुलोर्घञि** ॥ २७३ ॥ स्फुरस्फुलोर्धात्वोरचः घञ्याद् भवति । विस्फारः विस्फालः ॥

**इङः** ॥ २७४ ॥ इङोऽकर्तरि घञ् भवति । अध्यायः उपाध्यायः ॥

**पूलूनीरोर्निरभ्यवोपसर्गे** ॥ २७५ ॥ निसः प्वः अभेर्ल्वः अवान्नियः उपसर्गसामान्याद्रौश्चाकर्तरि घञ् भवति । निष्पावः अभिलावः अवनायः विरावः संरावः ॥

**भूश्र्यदोऽच्** ॥ २७६ ॥ उपसर्गात् भूश्र्यदिभ्योऽकर्तरि अच् भवति । च इत् । प्रभवः परिभवः विभवः प्रश्रयः परिश्रयः प्रघसः विघसः ॥

**नौ णश्चादः** ॥ २७७ ॥ नेरदो णोऽच्च भवति । न्यादः निघसः ॥

**खनद्गदक्वणपठो वा** ॥ २७८ ॥ नेः खनादिभ्योऽकर्तरि अल् वा भवति । पक्षे घञ् । निखनः निखानः निगदः निगादः निनदः निनादः निक्वणः निक्वाणः निपठः निपाठः ॥

**यमः सन्निव्युपे** ॥ २७९ ॥ सन्निव्युपेभ्यो यमोऽकर्तर्यज्वा भवति । संयमः संयामः नियमः नियामः वियमः वियामः उपयमः उपयामः ॥

**क्वणो वैणे** ॥ २८० ॥ उपसर्गात् क्वणो वैणेऽर्थे अज्वा भवति । प्रक्वणः प्रक्वाणः ॥

**घोः किः** ॥ २८१ ॥ घुसंज्ञादकर्तरि किर्भवति । कित्त्वादातो लुक् । आदिः प्रधिः विधिः सन्धिः । असमत्वात् घञपि । आदायः ॥

**आप्यादाधारे** ॥ २८२ ॥ आप्याद् घोराधारे किर्भवति । जलानि धीयन्तेऽस्मिन्निति जलधिः इषुधिः ॥

**य्वृगंवश्वृरणदृग्रहोऽच्** ॥ २८३ ॥ इवर्णान्तादुवर्णान्तादृदन्तात् गमादिभ्यश्च अकर्तर्यच् भवति । अयः प्रत्ययः नयः प्रणयः जवः प्रजवः आस्रवः लवः पवः दरः तरः गमः अधिगमः वशः वरः संवरः रणः आदरः ग्रहः प्रतिग्रहः ॥

**समुद्यजः पशौ** ॥ २८४ ॥ समुद्भ्यामजोऽकर्तर्यच् भवति पशुसम्बन्धे । समजः उदजः पशूनाम् । अन्येषां । समाजः उदाजः ॥

**प्रमदसम्मदौ हर्षे** ॥ २८५ ॥ एतौ हर्षे अजन्तौ निपात्येते । प्रमदः सम्मदः । हर्ष इत्यर्थः । अन्यत्र । प्रमादः सम्मादः ॥

**प्रघणप्रघाणौ कोष्ठकांशे** ॥ २८६ ॥ एतौ कोष्ठकांशे निपात्येते । प्रघणः प्रघाणः । अन्यत्र । प्रघातः ॥

**घनोद्घनापघनोपघ्ननिघोद्घसङ्घा मूर्त्यत्याधानाङ्गासन्ननिमितप्रशस्तगणाः** ॥ २८७ ॥ घनादयो यथासङ्ख्यं मूर्त्यादिषु निपात्यन्ते । घनो मूर्तिः । उद्घनोऽत्याधानं तक्षणे आधारकाष्ठम् । अपघनोऽङ्गम् । उपघ्नः आसन्नः । निघः निमितः परिणाहः । उद्घः प्रशस्तः । सङ्घो गणः । अन्यत्र । उद्घातः अपघातः इत्यादि ॥

**ह्वो वश्वोश्विन्यभ्युपे** ॥ २८८ ॥ विन्यभ्युपेभ्यो ह्वयतेरच् भवति वा इत्यस्य च उश् । विहवः निहवः अभिहवः उपहवः । अन्यस्मात् । संह्वायः ॥

**आङि युद्धे** ॥ २८९ ॥ आङो ह्वयतेरच् भवति वश्च उश् युद्धेऽर्थे । आहवः । अन्यत्र । आह्वायः ॥

**निपानमाहावः** ॥ २९० ॥ निपाने आहाव इति निपात्यते । पश्वादीनां पानार्थो जलाधार आहावः ॥

**भावेऽनुपसर्गात्** ॥ २९१ ॥ अनुपसर्गात् ह्वेञो भावे अच् भवति वश्चोश् । ह्वानं हवः ॥

**मद्व्यधजपः** ॥ २९२ ॥ अनुपसर्गेभ्यो मदादिभ्योऽकर्तर्यच् भवति । मदः व्यधः जपः । उपसर्गाद्धञ् । उन्मादः अनुव्याधः उपजापः ॥

**क्वणयंहसस्वन्यो वा** ॥ २९३ ॥ अनुपसर्गेभ्योऽकर्तर्यज्वा भवति । क्वणः क्वाणः यमः यामः हसः हासः स्वनः स्वानः नयः नायः । उपसर्गात् । प्रक्वाणः प्रयामः प्रहासः विष्वाणः प्रणयः ॥

**आङि रुप्लोः** ॥ २९४ ॥ आङो रुप्लुभ्याम् अकर्तर्यज्वा भवति । आरवः आरावः आप्लवः आप्लावः । अन्यस्मात् । विरावः विप्लवः ॥

**ग्रहोऽवे वर्षे** ॥ २९५ ॥ अवाद् ग्रहोऽज्वा भवति वर्षसम्बन्धे । अव-ग्रहः अवग्राहः । वर्षस्य विघात इत्यर्थः । अन्यत्र । अवग्रहः ॥

**प्रे युग्यतुलासूत्रे** ॥ २९६ ॥ प्राद् ग्रहोऽकर्तर्यज्वा भवति युग्यसूत्र-तुलासूत्रयोः । प्रग्रहः प्रग्राहः । अन्यत्र । प्रग्रहः ॥

**वृर्वस्त्रे** ॥ २९७ ॥ प्राद्वृञोऽकर्तर्यज्वा भवति वस्त्रेऽर्थे । प्रवरः प्रावारः वस्त्रविशेषः । अन्यत्र । प्रवरो मुनिः ॥

**उदि नीश्रिञः** ॥ २९८ ॥ उदो नीश्रिभ्याम् अकर्तर्यज्वा भवति । उन्नयः उन्नायः उच्छ्रयः उच्छ्रायः ॥

**पूद्रुयौतेर्घञ्** ॥ २९९ ॥ उदः पूद्रुयौतिभ्योऽकर्तरि घञ् भवति । उत्पावः उद्द्रावः उद्यावः ॥

**ग्रहः** ॥ ३०० ॥ उदो ग्रहोऽकर्तरि घञ् भवति । उद्ग्राहः ॥

**समि मुष्टौ** ॥ ३०१ ॥ समो ग्रहोऽकर्तरि घञ् भवति मुष्टिविषयेऽर्थे । अहो मल्लस्य सङ्ग्राहः । मुष्टेर्दार्ढ्यमित्यर्थः । अन्यत्र । सङ्ग्रहः ॥

**युद्रुदोः** ॥ ३०२ ॥ समौ युद्रुदुभ्योऽकर्तरि घञ् भवति । संयावः संद्रावः सन्दावः ॥

**स्तोर्यज्ञे** ॥ ३०३ ॥ समस्स्तोरकर्तरि घञ् भवति यज्ञविषये । संस्तावो यागभूमिः । अन्यत्र । संस्तवः ॥

**द्रुस्तुस्रोः** ॥ ३०४ ॥ प्राद्द्रुस्तुस्रुभ्योऽकर्तरि घञ् भवति । प्रद्रावः प्रस्तावः । प्रस्रावः ॥

**स्त्रोऽयज्ञे** ॥ ३०५ ॥ प्रात् स्तॄञोऽकर्तरि घञ् भवति न यज्ञविषये । नयप्रस्तारः विमानप्रस्तारः । यज्ञे । शान्तिप्रस्तरः ॥

**वौ प्रथनेऽशब्दे** ॥ ३०६ ॥ वेः स्तॄञोऽकर्तरि प्रथने विशालत्वे घञ् भवति न शब्दविषये । विस्तारः पटस्य । विस्तरः प्रवचनस्य ॥

**क्षुश्रोः** ॥ ३०७ ॥ वेः क्षुश्रुभ्याम् अकर्तरि घञ् भवति । विक्षावः विश्रावः ॥

**व्युपे शीङः क्रमे** ॥ ३०८ ॥ व्युपाभ्यां शीङोऽकर्तरि घञ् भवति क्रमविषये । विशायः उपशायः । क्रमप्राप्तं शयनम् । अन्यत्र । विशयः उपशयः ॥

**हस्तादेयेऽस्तेयेऽनुदश्चेः** ॥ ३०९ ॥ अनुदश्चिञोऽकर्तरि घञ् भवति हस्तादेयविषये न स्तेये । पुष्पप्रचायः क्रियते वधूभिः । स्तेये । पुष्पप्रचयः क्रियते चोरेण । उदः । पुष्पोच्चयः ॥

**चित्युपसमाधानावासदेहे कश्चादेः** ॥ ३१० ॥ चित्यादिविषयेऽर्थे चिञोऽकर्तरि घञ् भवति आदेश्चस्य कश्च । चितौ । आकायः । उपसमाधाने । गोमयनिकायः । आवासे । मुनिनिकायः । देहे । कायः । अन्यत्र । चयः ॥

**सङ्घेऽनुपरौ** ॥ ३११ ॥ सङ्घेऽर्थे चिञोऽकर्तरि घञ् भवति आदेश्च कः नोपरिभावे । देवाश्चतुर्निकायाः । उपरिभावे । सूकरनिचयः ॥

**माने** ॥ ३१२ ॥ माने सङ्ख्यापरिमाणयोरकर्तरि घञ् भवति । एको निघासः । द्वौ निघासौ । तण्डुलसंग्राह इत्यादि ॥

**न्युदि ग्रः** ॥ ३१३ ॥ न्युद्भ्यां गिरतेरकर्तरि घञ् भवति । निगारः उद्गारः । न्युदीति किं । गरः सङ्गरः ॥

**क्रो धान्ये** ॥ ३१४ ॥ न्युद्भ्यां किरतेरकर्तरि घञ् भवति धान्यविषये । निकारस्तण्डुलानामुत्कारः । राशिरित्यर्थः । अन्यत्र । फलानां निकरः । गुणोत्करैः । करैः ॥

**नौ वृः** ॥ ३१५ ॥ नेर्वृञोऽकर्तरि घञ् भवति धान्ये । नीवारः । अन्यत्र । निवरः ॥

**इणोऽभ्रेषे** ॥ ३१६ ॥ नेरिणोऽकर्तरि घञ् भवति न भ्रेषे । न्यायः । भ्रेषे । न्ययो नाशः ॥

**परौ क्रमे** ॥ ३१७ ॥ परेरिणोऽकर्तरि घञ् भवति क्रमेऽर्थे । पर्यायः ऋतूनाम् । अन्यत्र । पर्ययः ॥

**भोऽवज्ञाने वा** ॥ ३१८ ॥ परेर्भुवोऽकर्तरि घञ् वा भवत्यवज्ञाने । परीभावः परिभवः । अवज्ञाने असति । परितो भवः परिभवः ॥

**स्थादिभ्यः कः** ॥ ३१९ ॥ स्थादिभ्योऽकर्तरि को भवति । सन्तिष्ठतेऽस्यामिति संस्था । एवं व्यवस्था प्रपिबन्त्यस्यामिति प्रपा । विहन्यते अनेन अस्मिन्निति वा विघ्नः । आयुध्यते अनेन इत्यायुधम् । इत्यादयः प्रयोगगम्याः । बहुलाधिकारात् विघात इत्याद्यपि ॥

**ट्विततोऽथुक्वी** ॥ ३२० ॥ ट्वितोऽधातोरकर्तरि अथुर्भवति ड्वितः क्त्रिः । क इत् । वेपथुः श्वयथुः स्फूर्जथुः नन्दथुः भरथुः वमथुः ॥

**त्रिमे** ॥ ३२१ ॥ क्त्रिरिमपर एव प्रयोज्यः । पाकेन निर्वृत्तं पक्त्रिमम् । उप्त्रिमं कृत्रिमं विहित्रिमं याचित्रिमं भृत्रिमं दत्त्रिमं मक्त्रिमं ॥

**यज्यत्प्रच्छरक्षस्वप्नचो नः** ॥ ३२२ ॥ यजादिभ्योऽकर्तरि नो भवति । यज्ञः यत्नः । छस्य शः । प्रश्नः स्वप्नः रक्ष्णः ॥

**विच्छेर्नङ्** ॥ ३२३ ॥ विच्छेरकर्तरि नङ् भवति । विश्नः ॥

**व्याप्तौ भावेऽन ञिन्** ॥ ३२४ ॥ धातोर्भावे अनो ञिन् च भवतः व्याप्तौ गम्यमानायां ॥

**ञिनोऽण्** ॥ ३२५ ॥ ञान्तात् ञिनन्ताच्च स्वार्थे अण् भवति । सङ्कुटनं साङ्कोटिनमेषां । संरवणं सांराविणं सेनायाः ॥

**स्त्रियां क्तिन्** ॥ ३२६ ॥ धातोरकर्तरि स्त्रीलिङ्गे क्तिन् भवति । कनावितौ ॥

**तेर्ग्रहादिभ्यः** ॥ ३२७ ॥ ग्रहादिभ्य एव क्तेरिड् भवति । इति नियमादन्येभ्यो न भवति । हत्तिः यत्तिः । पचुङ् व्यक्तीकरणे । पङ्क्तिः भ्राष्टिः गुप्तिः ॥

**लभादिभ्यः** ॥ ३२८ ॥ लभादिभ्योऽकर्तरि क्तिन् भवति । लब्धिः क्षान्तिः कान्तिः । यलुक् । ऊतिः पूतिः तातिः स्वस्तिः ऊढिः गाढिः स्मितिः कुतिः च्युतिः धृतिः मितिः दत्तिः प्यातिः मित्तिः खित्तिः क्षुब्धिः भ्रष्टिः ध्वस्तिः वृद्धिः स्यत्तिः क्लृप्तिः तूर्तिः जूर्तिः स्मृतिः । ऋल्वादेरिति तस्य नः । दीर्णिः मत्तिः राष्टिः रतिः बुद्धिः । ग्रहादित्वादिट् । निपतितिः वान्तिः सत्तिः क्लिष्टिः । ग्रहादित्वादिट् । निकुचितिः रूढिः भूतिः सुतिः द्रुतिः जितिः धीतिः पीतिः घ्रातिः स्थितिः । लभादित्वात् व्यवस्थितिः दातिः ॥

**ग्लाज्याहो निः** ॥ ३२९ ॥ ग्लादिभ्योऽकर्तरि स्त्रियां निर्भवति । ग्लानिः ज्यानिः गीतिः ध्यातिः सृतिः ऋतिः तीर्णिः चित्तिः । ग्राहादित्वादिट् । अर्चितिः । छलुक् । हूर्तिः मूर्तिः स्फूर्तिः सक्तिः । ग्रहादित्वादिट् । निपठितिः

तप्तिः जप्तिः यब्धिः गतिः सृप्तिः भणितिः कान्तिः नतिः यतिः आचान्तिः भ्रान्तिः फुल्तिः क्ष्यूतिः ष्ठ्यूतिः ऊतिः वृष्टिः पुष्टिः हृष्टिः प्लुष्टिः पृष्टिः दृष्टिः दष्टिः शस्तिः दग्धिः शूतिः उषितिः उदितिः इष्टिः उप्तिः ऊढिः उतिः वीतिः हूतिः धौतिः पक्तिः भक्तिः ॥

**क्तिन्यपचायः** ॥ ३३० ॥ अपाचाय उपान्त्यस्य क्तिनीट् भवति । यलुक् । अपचितिः । न आत् । खातिः माढिः गूढिः श्रितिः हृतिः भृतिः कृतिः नीतिः ॥ अदादिः ॥ जग्धिः वित्तिः मृष्टिः उक्तिः सुतिः उष्टिः रुतिः इतिः ख्यातिः मितिः ईर्तिः आशास्तिः (शिष्टिः) पृक्तिः सूतिः शीतिः अधीतिः ह्नुतिः द्विष्टिः ॥

ह्वादिः ॥ हुतिः भीतिः हानिः मितिः दत्तिः हितिः निक्तिः ॥ दिवादिः ॥ द्यूतिः स्यूतिः नृत्तिः क्षिप्तिः विद्धिः शुष्टिः दुष्टिः श्लिष्टिः शक्तिः शुद्धिः सिद्धिः शान्तिः दान्तिः श्रान्तिः क्लान्तिः भ्रष्टिः कृष्टिः रुष्टिः लुब्धिः ऋद्धिः गृद्धिः रद्धिः नष्टिः तृप्तिः दृप्तिः मुग्धिः मूढिः जीर्णिः शितिः शातिः छितिः छातिः सितिः दितिः जातिः दीप्तिः पूर्तिः क्लिष्टिः पत्तिः वित्तिः युक्तिः सृष्टिः प्रीतिः नद्धिः शप्तिः ॥

स्वादिः ॥ सुतिः विस्तृतिः वृतिः धूतिः दुतिः श्रुतिः प्रहितिः आप्तिः राद्धिः साद्धिः धृष्टिः ॥ क्र्यादिः ॥ क्रीतिः गृहीतिः । तो नः । लूनिः धूनिः स्तीर्णिः कीर्णिः वूर्णिः शीर्णिः मूर्णिः पूर्तिः चीर्णिः ईर्णिः गीर्णिः ज्यानिः लीनिः ज्ञातिः अष्टिः वृतिः ॥ तुदादिः ॥ तुत्तिः दिष्टिः लिप्तिः सिक्तिः मुक्तिः लुप्तिः कृत्तिः क्षितिः मृतिः धृतिः पृष्टिः मक्तिः स्पृष्टिः मृष्टिः दृब्धिः इष्टिः गूर्तिः पृतिः जुष्टिः सक्तिः रब्धिः लब्धिः ॥ तनादिः ॥ ततिः सातिः क्षतिः मतिः ॥ रुधादिः ॥ रुद्धिः छित्तिः इद्धिः शिष्टिः पिष्टिः भक्तिः भुक्तिः अक्तिः ॥ ण्यन्तात् ॥ पाक्तिः याष्टिः इत्यादि शिष्टप्रयोगानुसारेण ज्ञातव्यम् ॥

**स्त्रियजस्तो: करणे** ॥ ३३१ ॥ स्त्रादिभ्य: करणे स्त्रियां क्तिन् भवति। अनटोऽपवाद:। स्तुवन्त्यनयेति स्तुति:। इच्छन्ति यजन्ति वा अनयेति इष्टि:। स्तुवन्त्यनयेति स्तुति: ॥

**गापापचो भावे** ॥ ३३२ ॥ गादिभ्यो भावे स्त्रियां क्तिन् भवति। अङोऽपवाद:। सङ्गीति: प्रपीति: पक्ति: ॥

**स्थो वा** ॥ ३३३ ॥ स्थो भावे स्त्रियां क्तिन् भवति वा। व्यवस्थिति:। पक्षे अङ्। व्यवस्था ॥

**व्यतिहारे ञ:** ॥ ३३४ ॥ व्यतिहारे भावे धातो: स्त्रियां ञो वा भवति। व्याक्रोशी व्याक्रुष्टिर्वर्तते। व्यावलेपी व्यावलिप्ति: ॥

**ण्युच:** ॥ ३३५ ॥ ण्यन्तादुक्षश्च व्यतिहारे भावे स्त्रियां ञो वा भवति। व्यातिचोरी व्यातिचर्चो व्यात्युक्षी ॥

**व्रज्यजः क्यप्** ॥ ३३६ ॥ व्रज्यजिभ्यां भावे स्त्रियां क्यप् भवति। व्रज्या इज्या ॥

**कृञः शक्तिन् च** ॥ ३३७ ॥ कृञोऽकर्तरि स्त्रियां श: क्तिन् क्यप् च भवति। क्रिया कृति: कृत्या ॥

**सम्पदादिभ्य: क्तिन्क्विप्** ॥ ३३८ ॥ सम्पदादिभ्योऽकर्तरि स्त्रियां क्तिन्क्विपौ भवत:। सम्पत्ति: विपत्ति: आपत्ति: प्रपत्ति: संवित्ति:। क्विप्। सम्पत् विपत् आपत् प्रतिपत् आशी:। आङश्शासूङ् इच्छायाम्। शासङ्क्विति इतीत्। संवित् परिषत् ॥

**यूतिजूतिसातिहेतिकिर्त्याटाट्यामृगयेच्छायाञ्चाकृपा:** ॥ ३३९ ॥ यूत्यादय: स्त्रियामकर्तरि निपात्यन्ते। यूति: जूति: साति: हेति: कीर्ति: आटाट्या मृगया इच्छा याञ्चा कृपा ॥

**णिवेत्त्यासश्रन्थघट्टवन्दो नः** ॥ ३४० ॥ ण्यन्तेभ्योऽवेत्त्यादिभ्यश्च स्त्रियामकर्तरि अनो भवति। एधना भावना पाचना कारणा हापना चोरणा लक्षणा योजना वेदना आसना श्रन्थना घट्टना वन्दना ॥

**सृचरो यः** ॥ ३४१ ॥ परेः सृचरिभ्यां स्त्रियामकर्तरि यो भवति । परिसर्या परिचर्या ॥

**जागुरश्च** ॥ ३४२ ॥ जागर्तेरकर्तरि स्त्रियामद् भवति यश्च । जागरा जागर्या ॥

**प्रत्ययात्** ॥ ३४३ ॥ प्रत्ययान्तात् स्त्रियामकर्तरि अद् भवति। गोपाया चिकित्सा तितिक्षा चिकीर्षा कण्डूया लोलूया पुत्रीया पुत्रकाम्या ॥

**गुरोर्हलः** ॥ ३४४ ॥ गुरुमतो हलन्ताद्धातोरकर्तरि स्त्रियामद् भवति । स्पर्द्धा बाधा ईक्षा भिक्षा ईहा चेष्टा ईडा सेवा इत्यादयः ॥

**षिच्चिन्तिपूजिकथिकुम्भिचर्च्यन्तर्धोऽङ्** ॥ ३४५ ॥ षितश्चिन्त्यादिभ्यश्च स्त्रियामकर्तरि अङ् भवति । ङ इत् । घटा व्यथा प्रथा म्रदा त्वरा । ऋद्दशोऽङ्यिर् । जरा क्षिया चिन्ता पूजा कथा कुम्भा चर्चा अन्तर्धा ॥ लिङ्गान्तरे प्रत्ययान्तरमपि । चर्चः अन्तर्धिरित्यादि ॥

**उपसर्गादातः** ॥ ३४६ ॥ उपसर्गादादन्तात् धातोः स्त्रियामकर्तरि अङ् भवति । प्रज्ञा प्रदा उपधा ॥

**भिदादयः क्वचित्** ॥ ३४७ ॥ भिदादयः स्त्रियामकर्तरि निपात्यन्ते क्वचिदर्थविशेषे । भिदा विदा खिदा छिदा आरा धारा हारा गुहा इत्यादयः प्रयोगगम्याः ॥

**संज्ञाभावे ण्वुः** ॥ ३४८ ॥ धातोरकर्तरि संज्ञायां भावे च स्त्रियां ण्वुर्भवति । प्रच्छर्दिका प्रवाहिका प्रस्कन्दिका विचर्चिका एवंनामानो व्याधयः । भावे । आसिका शायिका इत्यादि ॥

**प्रश्नाख्याने वेञ्** ॥ ३४९ ॥ प्रश्ने प्रतिवचने च धातोरकर्तरि स्त्रियामिञ् ण्वुश्च वा भवतः । पक्षे यथा प्राप्तं च । कां कारीं कां कारिकां कां क्रियां कां कृतिं कां कृत्यां वा अकार्षीः । सर्वाः कारीः कारिकाः क्रियाः कृतीः कृत्याः अकार्षम् । एवं पाठी पाठिका पठितिः पाची पाचिका पक्तिः गणी गणिका गणना इत्यादि ॥

**पर्यायोत्पत्त्यर्हर्णे ण्वुः** ॥ ३५० ॥ धातोरकर्तरि स्त्रियां ण्वुर्भवति पर्यायादौ । भवतः आसिका । भवतः शायिका । भवतो गामिका । आसनादिपर्याय इत्यर्थः । घृतभोजिका उदपादि । गोपालिकामर्हति भवान् । इक्षुभक्षिकां धारयसि ॥

**नञोऽनिः शापे** ॥ ३५१ ॥ नञो धातोरकर्तरि स्त्रियामनिर्भवति शापे । अगमनिस्ते वृषल भूयात् इत्यादि ॥

**नब्भावे क्तोऽभ्यादिभ्यः** ॥ ३५२ ॥ धातोर्नपुंसके भावे क्तो भवति न भ्यादिभ्यः । हसितं जल्पितं शयितम् आसितं नृत्तं स्फुरितं भाषितम् इत्यादि । भ्यादिभ्यः । भयं वर्षमित्यादि ॥

**करणाधारे चानट्** ॥ ३५३ ॥ करणे आधारे नब्भावे च धातोरनड् भवति न भ्यादिभ्यः । ट इत् । विचयनी इध्मव्रश्चनः फलशातनः श्मश्रुकर्तनः । आधारे । शयनम् अधिकरणं गोदोहनी तिलपीडनी राजधानी दर्शनं । प्रश्नथेति नलुक् । नब्भावे । भवनं हसनं जल्पनं शयनं कथनं तक्षणमित्यादि । निष्ठीवनं निष्ठेवनं सीवनं सेवनम् इति बहुलाधिकारात् ॥

**पुन्नाम्नि घःप्रायः** ॥ ३५४ ॥ पुन्नाम्नि पुल्लिङ्गे नाम्नि करणाधारयोर्धातोर्घो भवति ॥

**घेऽद्वाद्युपसर्गस्य** ॥ ३५५ ॥ एकोपसर्गस्य छदेरुपान्त्यस्य घपरे णौ ह्रस्वो भवति । प्रच्छाद्यते अनेनेति प्रच्छदः उरश्छदः दन्तच्छदः सितच्छदः

प्लवः करः । अधिकरणे । आलीयते अस्मिन्नित्यालयः आकरः प्रायोग्रहणा-दनडादिरपि ॥

**गोचरसञ्चरकषनिकषखलभगवहव्रजव्यजापणनिगमं** ॥ ३५६ ॥ गोचरादयः करणाधारयोः पुन्नाम्नि घान्ता निपात्यन्ते । गावश्चरन्त्यस्मिन् इति गोचरः सञ्चरः कषः निकषः खलः भगः वहः व्रजः व्यजः आपणः निगमः ॥

**हलो घञ्** ॥ ३५७ ॥ हलन्तात् पुन्नाम्नि करणाधारयोर्घञ् भवति । लेखः वेष्टः बन्धः वेगः अपामार्गः मार्गः आरामः प्रासादः ॥

**तृस्त्रोऽवात्** ॥ ३५८ ॥ अवात् तृस्तृभ्यां पुन्नाम्नि करणाधारयोर्घञ् भवति । अवतारः अवस्तारः ॥

**समव ह्रञः** ॥ ३५९ ॥ समवाभ्यां हृञः पुन्नाम्नि करणाधारयोर्घञ् भवति । संहारः अवहारः ॥

**जारदाराध्यायन्यायोद्यावानायाधारावायाः** ॥ ३६० ॥ जारा-दयः पुन्नाम्नि घञन्ता निपात्यन्ते । जारः दाराः अध्यायः न्यायः उद्यावः आनायः आधारः आवायः ॥

**दुस्स्वीषतः कृच्छ्राकृच्छ्रे खः** ॥ ३६१ ॥ कृच्छ्रे दुःखे दुसः अकृच्छ्रे स्वीषद्भ्यां च धातोः खो भवति । स च सकर्मकात् कर्मणि अकर्मकाद् भावे । ख इत् । दुःखेन भूयते अनेन दुर्भवं । सुखेन भूयतेऽनेन सुभवम् । ईष-द्भवम् । एवं दुश्शयं सुशयम् ईषच्छयं । दुःखेन क्रियते दुष्करः । सुखेन क्रियते सुकरः ईषत्करः एवं दुर्बोधः सुबोधः इषद्बोधः दुर्लभः सुलभः ईषल्लभः इत्यादि सर्वत्र योज्यं ॥

**च्वौ कर्त्राप्यात् भूकृञः** ॥ ३६२ ॥ कृच्छ्राकृच्छ्रयोर्दुस्स्वीषद्भ्यः पराभ्यां च्व्यर्थे वर्तमानाभ्यां कर्तृकर्मभ्यां परात् भुवः कृञश्च खो भवति । खित्वात्

मम् । दुःखेनानाढ्येनाढ्येन भूयते दुराढ्यंभवं देवदत्तेन । एवं स्वाढ्यंभवम् ईष-
दाढ्यंभवं । दुःखेनानाढ्यः आढ्यः क्रियते दुराढ्यंकरः स्वाढ्यंकरः ईषदाढ्यंकरः ॥

**आतोऽनः** ॥ ३६३ ॥ कृच्छ्राकृच्छ्रयोर्दुःस्वीषद्भ्यः आदन्तात् धातोरनो भवति । खापवादः । दुर्ज्ञानं सुज्ञानम् ईषज्ज्ञानम् इत्यादि ॥

**शास्युधिदृशिधृषिमृषः** ॥ ३६४ ॥ कृच्छ्राकृच्छ्रयोर्दुःस्वीषद्भ्यः शासादिभ्योऽनो भवति । दुःशासनः सुशासनः ईषच्छासनः दुर्योधनः सुयोधनः ईषद्योधनः दुर्दर्शनः सुदर्शनः ईषद्दर्शनः दुर्धर्षणः सुधर्षणः ईषद्धर्षणः दुर्मर्षणः सुमर्षणः ईषन्मर्षणः । योगविभागात् खोऽपि । दुर्द्धर्ष इत्यादि ॥

**निषेधेऽलंखल्वोः क्त्वा** ॥ ३६५ ॥ अलमि खलौ चोपपदे धातोः क्त्वा वा भवति निषेधे । क इत् । तस्वादित्यव्ययत्वम् । अलं कृत्वा । खलु कृत्वा । पक्षे । अलं करणेन । अनिषेधे । अलङ्कारः इत्यादि ॥

**परावरे** ॥ ३६६ ॥ परावरत्वे गम्ये धातोः क्त्वा वा भवति ॥

**क्त्वोऽनञः प्यः** ॥ ३६७ ॥ समासान्तस्य क्त्वः प्यो भवति न नञः । प इत् । पर्वतमतिक्रम्य नदी । नदीमगत्वा पर्वतः ॥

**प्राक्काले** ॥ ३६८ ॥ अपरकालेन धातुनैककर्तृकात् प्राक्काले वर्तमानात् धातोः क्त्वा भवति । भोजनं पूर्वं पश्चाद्व्रजनं । भुक्त्वा व्रजति । एधित्वा वन्दित्वा । यौ हलादेरिति वा कित्त्वं । मुदित्वा मोदित्वा हत्त्वा तितिक्षित्वा तिजित्वा तेजित्वा तपित्वा तप्त्वा मीमांसित्वा पनायित्वा पनित्वा क्षमित्वा । किजलीति दीर्घः । क्षान्त्वा कामयित्वा ॥

**त्व्यूदितः** ॥ ३६९ ॥ ऊदितो धातोः क्त्वाया इड्वा भवति । कमित्वा कान्त्वा क्रूयित्वा गाहित्वा गाढ्वा स्मित्वा च्युत्वा धृत्वा मित्वा दत्त्वा पवित्वा

पूत्वा डयित्वा मेदित्वा स्वेदित्वा स्रम्भित्वा स्रब्ध्वा स्रंसित्वा स्रस्त्वा भ्रंशित्वा भ्रष्ट्वा ध्वंसित्वा ध्वस्त्वा ॥

**क्त्वि** ॥ ३७० ॥ धातोरिडादौ क्त्वायां किद्वन्न भवति । वर्तित्वा वृत्त्वा स्यन्दित्वा ॥

**स्कन्दस्यन्दः** ॥ ३७१ ॥ स्कन्दस्यन्दोः क्त्वायां किद्वन्न भवति । स्यन्त्वा कल्पित्वा क्लृप्त्वा स्मृत्वा । किन्युगिति नेट् । दीर्त्वा सोढ्वा सहित्वा रत्वा बुद्ध्वा पतित्वा वमित्वा वान्त्वा सत्त्वा शस्त्वा रुद्ध्वा भूत्वा जित्वा धीत्वा पीत्वा घ्रात्वा ध्मात्वा स्थित्वा दात्वा ग्लात्वा गीत्वा ध्यात्वा तीर्त्वा चिकित्सित्वा सेधित्वा सिधित्वा सिद्ध्वा स्कन्त्वा अञ्चित्वा अक्त्वा ॥ लुञ्च अपनये ॥

**थफवञ्चिलुञ्च्यृतितृषिमृषिकृश इटि** ॥ ३७२ ॥ नोपान्त्ययोस्थफान्त्ययोर्वञ्च्यादीनां च इडादौ क्त्वायां किद्वा भवति । लुचित्वा लुञ्चित्वा लोचित्वा वक्त्वा त्यक्त्वा ॥

**नशुजस्ति त्वि न्युपान्त्ये** ॥ ३७३ ॥ नशः नोपान्त्यस्य च जान्तस्य तादौ क्त्वायां किद्वा भवति । सङ्क्त्वा सक्त्वा गोपायित्वा गुपित्वा गुप्त्वा गोपित्वा गत्वा नत्वा यत्वा क्रमित्वा ॥

**क्रमस्त्वि** ॥ ३७४ ॥ क्रमो जलादौ क्त्वायामचो दीर्घो वा भवति। क्रान्त्वा क्रन्त्वा भ्रमित्वा भ्रान्त्वा शसित्वा शस्त्वा । मृषू सहने । मृषित्वा मर्षित्वा मृष्ट्वा कृष्ट्वा प्लुषित्वा प्लोषित्वा प्लुष्ट्वा दृष्ट्वा दष्ट्वा शंसित्वा शस्त्वा दग्ध्वा । इटि क्त्वीत्यकित्त्वान्नेक् । श्वयित्वा । क्तक्तामितीट् ॥

**मृडमृदुदकुषक्लिशवद्वसः** ॥ ३७५ ॥ मृडादीनामिडादौ क्त्वायां किद्वद् भवति । उषित्वा उदित्वा इष्ट्वा उप्त्वा ऊढ्वा उत्वा वीत्वा हूत्वा धावित्वा धौत्वा पक्त्वा भक्त्वा रक्त्वा रङ्क्त्वा खनित्वा खात्वा शप्त्वा गूहित्वा गूढ्वा श्रित्वा हृत्वा नीत्वा ॥ अथादादिः ॥ जग्ध्वा विदित्वा हत्वा भूत्वा मार्जित्वा

मृष्ट्वा उक्त्वा रुदित्वा सुप्त्वा जागरित्वा दरिद्रित्वा शासित्वा शिष्ट्वा वशित्वा रुत्वा इत्वा यात्वा मित्वा ईशित्वा सूत्वा शयित्वा द्विष्ट्वा ऊर्णुत्वा स्तुत्वा उक्त्वा ॥ अथ ह्वादिः ॥

**हाकस्त्वि** ॥ ३७६ ॥ हाकस्तादौ क्त्वायां हिर्भवति। हित्वा मित्वा भृत्वा दत्त्वा हित्वा निक्त्वा। अथ दिवादिः ॥ देवित्वा। ऊच्। द्यूत्वा नर्तित्वा क्षिप्त्वा विद्ध्वा पुष्ट्वा क्षुधित्वा क्षोधित्वा शुद्ध्वा शमित्वा शान्त्वा असित्वा अस्त्वा भ्रशित्वा भ्रष्ट्वा तृषित्वा तर्षित्वा रुषित्वा रोषित्वा रुष्ट्वा क्लिदित्वा क्लेदित्वा क्लित्त्वा गर्धित्वा गृद्ध्वा रधित्वा रद्ध्वा नशित्वा नष्ट्वा नंष्ट्वा द्रुहित्वा द्रोहित्वा द्रुग्ध्वा द्रूढ्वा ॥

**जॄव्रश्चस्त्वि** ॥ ३७७ ॥ जॄव्रश्चिभ्यां क्त्वायाम् इड् नित्यं भवति। जरित्वा जरीत्वा शित्वा शात्वा छित्वा छात्वा सित्वा दित्वा जनित्वा जात्वा क्लिशित्वा क्लेशित्वा क्लिष्ट्वा युद्ध्वा मत्वा सृष्ट्वा सूत्वा लीत्वा नद्ध्वा ॥ अथ स्वादिः ॥ सुत्वा वृत्वा दुत्वा दूत्वा श्रुत्वा आप्त्वा दम्भित्वा दब्ध्वा अशित्वा अष्ट्वा ॥ अथ क्र्यादिः। क्रीत्वा गृहीत्वा पूत्वा पूर्त्वा ईर्त्वा जीत्वा ज्ञात्वा बद्ध्वा। किद्वत्त्वे नलुक्। श्रथित्वा श्रन्थित्वा मथित्वा मन्थित्वा ग्रथित्वा ग्रन्थित्वा मृदित्वा मृडित्वा कुषित्वा क्षुभित्वा क्षोभित्वा क्लिशित्वा क्लिष्ट्वा अशित्वा मुषित्वा॥ अथ तुदादिः॥ तुत्त्वा भृष्ट्वा लिप्त्वा सिक्त्वा मुक्त्वा लुप्त्वा कर्तित्वा क्षित्वा मृत्वा कीर्त्वा दत्वा पृष्ट्वा मक्त्वा मङ्क्त्वा रुक्त्वा भुक्त्वा स्पृष्ट्वा मृष्ट्वा विष्ट्वा नुत्वा व्रश्चित्वा उज्झित्वा लुभित्वा लेभित्वा। गुफ गुम्फ ग्रन्थने। गुफित्वा गोफित्वा गुम्फित्वा इषित्वा एषित्वा इष्ट्वा कुटित्वा गुरित्वा विजित्वा स्वक्त्वा स्वङ्क्त्वा रब्ध्वा लब्ध्वा॥ अथ तनादिः। तनित्वा तत्वा सनित्वा सात्वा क्षणित्वा क्षात्वा मनित्वा मत्वा॥ अथ रुधादिः। रुद्ध्वा भित्त्वा युक्त्वा इन्धित्वा पिष्ट्वा भक्त्वा भङ्क्त्वा अञ्जित्वा अक्त्वा अङ्क्त्वा॥ अथ चुरादिः। चोरयित्वा कथयित्वा इत्यादि ॥ उपसर्गपूर्वत्वे ॥

**डाच्च्व्यूर्याद्यनुकरणं च ति** ॥ ३७८ ॥ डाजन्तं च्व्यन्तमूर्याद्यनुकरणं उपसर्गाश्च धातोः सम्बन्धि तिसंज्ञं भवति । तिदुस्खतीति समासे ॥

**क्त्वोऽनञः प्यः** ॥ ३७९ ॥ समासान्तक्त्वायाः प्यो भवति न नञः । प इत् । तगर्थः । प्रैध्य अभिवन्द्य प्रहृद्य अपत्रप्य प्रक्षम्य । णिलुक् । प्रकाम्य प्रोय्य विगाह्य विस्मित्य प्रच्युत्य विघृत्य ॥

**इ मेङः** ॥ ३८० ॥ मेङः प्ये इद्वा भवति । अपमित्य अपमाय प्रदाय परित्राय प्रपूय उड्डीय प्रमिद्य प्रखिद्य विस्रम्भ्य विस्रस्य अवभ्रश्य प्रध्वस्य निवृत्य प्रस्यद्य प्रक्लृप्य विस्मृत्य प्रदीर्य प्रसह्य ॥

**मो वा** ॥ ३८१ ॥ हनादीनां मध्ये मान्तस्य प्ये लुग् वा भवति । विरम्य विरत्य निबुध्य विपत्य प्रवम्य प्रसद्य प्ररुह्य अनुभूय विजित्य प्रधाय प्रपाय आघ्राय आध्माय प्रस्थाय प्रदाय प्रग्लाय सज्ञाय आध्याय वितीर्य विचिकित्स्य प्रसिध्य प्रस्कद्य प्राञ्च्य विलुच्य प्रवच्य सन्त्यज्य प्रसज्य प्रगुप्य प्रणत्य प्रणम्य नियत्य नियम्य प्रक्राम्य विभ्रम्य प्रमुष्य विक्रुष्य सम्पृष्य सन्दश्य विदश्य प्रशस्य प्रदह्य प्रतिशुल्य प्रोष्य अनूद्य समिज्य प्रोप्य । प्ये चेति नेक् । प्रवाय ॥

**व्यः** ॥ ३८२ ॥ व्येञः प्ये परे यञ इग्न भवति । संव्याय ॥

**परेर्वा** ॥ ३८३ ॥ परेर्व्येञः प्ये यञ इग्वा भवति । परिव्याय परिवीय आहूय प्रधान्य विपच्य सम्भज्य विरज्य प्रखन्य प्रखाय अभिशस्य विगुह्य आश्रित्य प्रहृत्य प्रकृत्य प्रणीय ॥ अदादिः ॥ प्रजग्ध्य संविद्य ॥

**प्ये** ॥ ३८४ ॥ हनादीनां प्ये लुग् भवति । प्रहत्य प्रमृज्य प्रोच्य प्ररुद्य प्रसुप्य प्रजागर्य प्रदरिद्र्य अनुशिष्य समुश्य प्ररुत्य समित्य अधीत्य प्रयाय प्रमाय अधीश्य प्रसूय अतिशय्य अधीत्य प्रद्विष्य प्रोर्णुत्य प्रस्तुत्य प्रोच्य ॥ ह्वादिः ॥ आहुत्य विहाय प्रमाय निभृत्य प्रदाय विधाय प्रणिज्य ॥ दिवादिः ॥

दीर्घः । प्रदीव्य प्रनृत्य संक्षिप्य आविद्य प्रपुष्य प्रक्षुध्य संशुध्य प्रशम्य प्रास्य प्रभ्रश्य वितृष्य प्रकुप्य विक्लिद्य अभिगृद्ध्य प्रणश्य अभिद्रुह्य निर्जीर्य निशाय निच्छाय व्यवसाय प्रदाय प्रजाय प्रजन्य संक्लिश्य नियुध्य अभिमत्य उपयुज्य विसृज्य प्रसूय विलीय सन्नह्य ॥ स्वादिः ॥ प्रसुत्य आवृत्य विधूय संश्रुत्य प्राप्य प्रधृष्य प्रदभ्य व्यश्य ॥ क्र्यादिः ॥ विक्रीय प्रगृह्य सम्पूय आपूर्य आचीर्य ॥

ज्यः ॥ ३८५ ॥ ज्यः ल्यपि यत्र इग् न भवति । प्रज्याय विज्ञाय संबध्य प्रश्नथ्य विमथ्य संग्रथ्य प्रमृद्य सम्मृज्य प्रगुद्य निष्कुष्य संक्षुभ्य संक्लिश्य प्राश्य प्रमुष्य ॥ तुदादिः ॥ वितुद्य प्रभृज्ज्य आलिप्य निषिच्य विमुच्य विलुप्य विकृत्य ॥

क्षेरीः ॥ ३८६ ॥ क्षेः ल्यपि ईद् भवति । प्रक्षीय प्रमृय विकीर्य आदृत्य आपृच्छ्य निमज्ज्य प्ररुज्य संस्पृश्य आमृश्य निविश्य विनुद्य प्रवृश्च्य प्रोञ्छ्य प्रलुभ्य निगुफ्य अभीष्य सङ्कुच्य आगूर्य उद्विज्य आस्वज्य आरभ्य उपलभ्य ॥ तनादिः ॥ प्रतत्य प्रसत्य प्रसाय प्रक्षत्य विमत्य ॥ रुधादिः ॥ निरुध्य विभिद्य नियुज्य समिध्य प्रपिष्य विभज्य व्यज्य ॥ चुरादिः ॥ प्रचोर्य प्रचिन्त्य ॥

लघोर्हलः ण्येऽय् ॥ ३८७ ॥ लघोः परो यो हल् ततः परस्य णेः ल्येऽय् भवति । प्रकथय्य विगणय्य विघटय्य प्रशमय्य ॥

वाप्नोः ॥ ३८८ ॥ आप्नोतेर्णेः ल्यपि अय् वा भवति । प्रापय्य प्राप्य । डाच् । पटपटाकृत्य । च्वि । शुक्लीकृत्य । ऊर्यादि । ऊरीकृत्य । अनुकरणं । खात्कृत्य ॥

तिरोऽन्तर्धौ ॥ ३८९ ॥ अन्तर्धौ पिधाने तिरस् इत्यव्ययं धातोः सम्बन्धि तिसंज्ञं भवति । तिरोभूय तिरोधाय ॥

नित्यं हस्तेपाणौ स्वीकृतौ ॥ ३९० ॥ हस्ते पाणौ इत्येते अव्यये स्वीकृतौ कृञो धातोः सम्बन्धिनी तिसंज्ञे भवतः । हस्तेकृत्य पाणौकृत्य ॥

**प्राध्वं बन्धे** ॥ ३९१ ॥ आनुकूल्ये प्राध्वमित्यव्ययं कृञो धातोस्सम्बन्धि तिसंज्ञं भवति । प्राध्वंकृत्य । शेषं सर्वं शास्त्रे ज्ञेयं ॥

**पूर्वाग्रे प्रथमाभीक्ष्ण्ये खमुञ्** ॥ ३९२ ॥ पूर्वादिषूपपदेषु आभीक्ष्ण्ये चार्थविशेषणे प्राक्काले धातोः खमुञ् वा भवति । खुतौ ञश्चेतः । पूर्वभोजं अग्रेभोजं प्रथमंभोजं दायंदायं । पक्षे त्वा । पूर्वं भुक्त्वा इत्यादि ॥

**अन्यथैवंकथमित्थमः कृञोऽनर्थकात्** ॥ ३९३ ॥ अन्यथादिभ्यः स्वार्थरहितात् कृञस्तुल्यकर्तृके खमुञ् वा भवति । अन्यथाकारम् एवंकारं कथंकारम् इत्थंकारं भुङ्क्ते । पक्षे । अन्यथा कृत्वा भुङ्क्ते इत्यादि ॥

**आप्यादाक्रोशे** ॥ ३९४ ॥ आक्रोशे गम्ये कर्मणः कृञः प्राक्काले खमुञ् वा भवति तुल्यकर्तृके । चोरंकारमाक्रोशति । चोरं कृत्वा आक्रोशति । चोरोऽयमित्याक्रोशतीत्यर्थः ॥

**विद्दृशिभ्यः कार्त्स्न्ये णम्** ॥ ३९५ ॥ कर्मणो विदादिभ्यो दृशेश्च प्राक्काले तुल्यकर्तृके णम् वा भवति कार्त्स्न्ये गम्ये । अतिथिवेदं भोजयति । कन्यादर्शं वरयति ॥

**यावतो जीवविन्दात्** ॥ ३९६ ॥ यावतो जीवविन्दाभ्यां णम् वा भवति तुल्यकर्तृके । यावज्जीवमधीते । यावज्जीवति तावदधीते इत्यर्थः । यावद्वेदं गृह्णाति । यावद्विन्दति तावद्गृह्णातीत्यर्थः ॥

**चर्मोदरात् पूरेः** ॥ ३९७ ॥ चर्मोदराभ्यां पूरेः प्राक्काले तुल्यकर्तृके णम् वा भवति । चर्मपूरमास्ते । उदरपूरमास्ते । चर्मोदरं च पूरयित्वा आस्ते इत्यर्थः ॥

**तृतीयोपदंशः** ॥ ३९८ ॥ तृतीयान्तेन युक्तादुपदंशः प्राक्काले तुल्यकर्तृके णम् वा भवति । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदश्य भुङ्क्ते इत्यर्थः ॥

**हिंसार्थात् तुल्याप्यात्** ॥ ३९९ ॥ तृतीयान्तेन युक्तात्तुल्यकर्मणः तुल्यकर्तृकाच्च हिंसार्थाद्धातोः प्राक्काले णम् वा भवति । खड्गप्रहारं शत्रुं जयति । खड्गेन प्रहृत्य शत्रुं जयति इत्यर्थः ॥

**तूर्णेऽपादानेन** ॥ ४०० ॥ अपादानेन युक्ताद्धातोः प्राक्काले तुल्यकर्तृके णम् वा भवति तूर्णे गम्ये । शय्योत्थायं धावति । शय्यायाः उत्थाय तूर्णं धावतीत्यर्थः ॥

**द्वितीयया** ॥ ४०१ ॥ द्वितीयान्तेन युक्ताद्धातोः प्राक्काले तुल्यकर्तृके णम् वा भवति तूर्णे गम्ये । यष्टिग्राहं धावति । यष्टिं गृहीत्वा तूर्णं धावतीत्यर्थः ॥

**तृष्यसः कालेनान्तरे** ॥ ४०२ ॥ कालवाचिना द्वितीयान्तेन युक्ताभ्यामन्तरे तृष्यसिभ्यां प्राक्काले तुल्यकर्तृके णम् वा भवति । द्व्यहतर्षं । द्व्यहं तर्षित्वा गावः पिबन्ति । अन्तर्मुहूर्तात्यासम् । अन्तर्मुहूर्तमत्यस्य पर्याप्तिं लभते इत्यर्थः ॥

**ग्रहादिशो नाम्ना** ॥ ४०३ ॥ द्वितीयान्तेन नामशब्देन युक्तात् ग्रहेरादिशेश्च प्राक्काले तुल्यकर्तृके णम् वा भवति । नामग्राहमाख्याति । नामादेशं वक्ति । नाम गृहीत्वा व्याख्यातीत्यादि ॥

**तूष्णीमा** ॥ ४०४ ॥ तूष्णीमित्यव्ययेन युक्ताद् भुवः प्राक्काले तुल्यकर्तृके णम् क्त्वा च भवतः । तूष्णीम्भावं तूष्णीम्भूय तिष्ठति । तूष्णीं भूत्वा तिष्ठतीत्यर्थः ॥

**स्वाङ्गात् तसा कृभ्वः** ॥ ४०५ ॥ तसन्तेन स्वाङ्गवाचिना युक्तात् कृञो भुवश्च णम् क्त्वा च भवतः । मुखतःकारं मुखतःकृत्य मुखतोभावं मुखतोभूय गतः ॥

**च्वौ धाण्विनानाना** ॥ ४०६ ॥ च्व्यर्थे धाणन्तेन विनानानाभ्यां च युक्तात् कृञो भुवश्च प्राक्काले तुल्यकर्तृके णम् क्त्वा च भवतः । अद्विधा द्विधा कृत्वा द्विधाकारं द्विधाकृत्य । एवं द्विधाभावं द्विधाभूय ऐकध्यंकारं ऐकध्यंकृत्य ऐकध्यंभावम् ऐकध्यंभूय विनाकारं विनाकृत्य विनाभावं विनाभूय नानाकारं नानाकृत्य नानाभावं नानाभूय ॥

**शुष्कचूर्णरूक्षादाप्यात् पिषस्तस्मिन् णम्** ॥ ४०७ ॥ शुष्कादिभ्यः कर्मभ्यः पिषो णम् वा भवति तस्मिन्नेव पिषावुपपदे । शुष्कपेषं पिनष्टि चूर्णपेषं पिनष्टि रूक्षपेषं पिनष्टि ॥

**कृञ्ग्रहोऽकृतजीवात्** ॥ ४०८ ॥ अकृतशब्दात् कृञो णम् वा भवति। जीवशब्दात् ग्रहेः तस्मिन् धातावुपपदे । अकृतकारं करोति । जीवग्राहं गृह्णाति ॥

**निमूलात् कषः** ॥ ४०९ ॥ कर्मणो निमूलात् कषेर्णम् वा भवति तस्मिन् धातावुपपदे । निमूलकाषं कषति ॥

**समूलाद् घ्नश्च** ॥ ४१० ॥ कर्मणस्समूलात् हन्तेः कषश्च णम् वा भवति । तस्मिन् धातावुपपदे । समूलघातं हन्ति । समूलकाषं कषति ॥

**करणात्** ॥ ४११ ॥ करणवाचिनः सुबन्ताद्धन्तेर्णम् वा भवति तस्मिन् धातावुपपदे । पाणिघातं हन्ति । पाणिना हन्तीत्यर्थः । एवं खड्गघातं हन्ति । खड्गेन हन्तीत्यर्थः ॥

**नाम्नि बन्धः** ॥ ४१२ ॥ करणवाचिनो नाम्नो बन्धेर्णम् वा भवति तस्मिन् धातावुपपदे । मर्कटबन्धं बध्नाति । मर्कटनाम्ना बन्धेन बध्नातीत्यर्थः ॥

**आधारात्** ॥ ४१३ ॥ आधारवाचिनो नाम्नो बन्धेर्णम् वा भवति तस्मि-न्नुपपदे । चक्रबन्धं बध्नाति । चक्रनाम्नि बन्धे बध्नातीत्यर्थः ॥

**कर्तुर्जीवपुरुषान्नशिवहः** ॥ ४१४ ॥ कर्तृवाचिनो जीवशब्दान्नशेर्णम् वा भवति पुरुषशब्दाद्वहः तस्मिन्नुपपदे । जीवनाशं नश्यति । जीवो नश्यतीत्यर्थः । पुरुषवाहं वहति । पुरुषो भूत्वा वहतीत्यर्थः ॥

**ऊर्ध्वात् पूश्शुषः** ॥ ४१५ ॥ कर्तुरूर्ध्वशब्दात् पूरिशुषिभ्यां णम् वा भवति तस्मिन्नुपपदे । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वं पूर्यते इत्यर्थः । ऊर्ध्वशोषं शुष्यति । ऊर्ध्वं शुष्यतीत्यर्थः ॥

**आप्याच्चेवे** ॥ ४१६ ॥ औपम्ये कर्मणः कर्तुश्च पराद्धातोः णम् वा भवति तस्मिन्नुपपदे । रत्ननिधायं निदधाति । रत्नमिव निदधातीत्यर्थः । सैकतभेदं भिनत्ति शैलं । धनचायं चिनोति धर्मं । कर्ता । महामतिनाशं नश्यति नास्तिकः । तद्वन्नश्यतीत्यर्थः । एवं पण्डितमारं म्रियते बालमारं म्रियते इत्यादि ॥

**समर्थास्त्यर्थधृषज्ञाशकग्लाघटसहार्हारभलभक्रमे तुम्** ॥ ४१७ ॥ समर्थास्त्यर्थयोरुपपदयोर्धृषादिषु चोपपदेषु धातोस्तुम् वा भवति । भोक्तुं समर्थः भोक्तुं पर्याप्तः भोक्तुमस्ति भोक्तुं सम्भवति भोक्तुं धृष्णोति भोक्तुं जानाति भोक्तुं शक्नोति भोक्तुं ग्लायति भोक्तुं घटते भोक्तुं सहते भोक्तुमर्हति भोक्तुमारभते भोक्तुं लभते भोक्तुं प्रक्रमते । पक्षे भोजनसमर्थ इत्यादि ॥

**तदर्थायां क्रियायां वुण् ॡट् च** ॥ ४१८ ॥ धातोर्वुण्ॡटौ तुम् च भवन्ति । तदर्थायां क्रियायां प्रयुज्यमानायां । भोजको व्रजति । भोक्ष्ये इति व्रजति । भोक्तुं व्रजति ॥

**लेङ्तुमिच्छार्थे तुल्यकर्तृके** ॥ ४१९ ॥ इच्छार्थे तुल्यकर्तृके तदर्थे क्रियान्तरे उपपदे धातोर्लेङ्तुमौ भवतः । भुञ्जीयेतीच्छति भोक्तुमिच्छति कामयते । इत्याद्यनुक्तं सर्वं शास्त्रे ज्ञेयं ॥

॥ इति कृत्सङ्ग्रहस्समाप्तः ॥

वन्दारुबृन्दपरिघट्टविलोलिताक्ष-
बृन्दारकेश्वरकिरीटतटावकीर्णैः ।
मन्दारपुष्पनिकरैर्विहितोपहारं
वन्दामहे जिनपतेः पदपद्मयुग्मम् ॥

यो जानाति समं समस्तमनिशं यं सूरयस्संश्रिताः
येनादर्शि विमुक्तिवर्त्म सुधियो यस्मै स्पृहां कुर्वते ।
यस्मात्तत्त्वविनिश्चयोऽप्रतिहतं यस्यैव शास्त्रं जयो
यस्मिन् विस्मयनीयपुण्यमहिमा भूयात् स वः श्रेयसे ॥

सुविवेचितपदरूपा
प्रकरणरचनाप्रवेशमुखसुभगा ।
वाङ्मयमूर्तिस्सौरी
कृतिरियमधिवसतु बुधहृदयम् ॥

गहनं व्याकरणं स्यात्
तत्रापि प्रक्रिया महागहनम् ।
लिड्लुङ्सन्यङ् कष्टं
तस्मादपि यङ्परं महाकष्टम् ॥

अम्भोजनेत्रं हरितोरुगात्रं
दयाकलत्रं वरशक्तिपात्रम् ।
भव्याब्जमित्रं भुवने पवित्रं
नाभेयपुत्रं प्रणमामि नित्यम् ॥

मुकुरविमलगण्डं चन्द्रसंकाशतुण्डं
गजकरभुजदण्डं कामदाहाग्निकुण्डम् ।
विनुतमुनिपषण्डं गोमठेशप्रचण्डं
गुणनिवहकरण्डं नौमि नाभेयपिण्डम् ॥

॥ प्रक्रियासंग्रहसहितं शाकटायनव्याकरणं समाप्तम् ॥

॥ श्रीरस्तु ॥

॥ श्रीः ॥



ALPHABETICAL

# INDEX TO THE SUTRAS

MENTIONED IN THE

## PRAKRIYĀSAṄGRAHA.



44